अर्हम्

श्रीजैनयशोविजयग्रन्थमाला [५]



श्रीवादिदेवसूरिविरचित-

# प्रमाणनयतत्त्वालोकालङ्कारस्य-

## परिच्छेदद्वयम् ।

पण्डितश्रीज्ञानचन्द्र, मल्लधारि-श्रीराजशेखरसूरिनिर्मित-

टिप्पण-पञ्जिकाभ्यां समलङ्कृतश्रीरत्नप्रभाचार्यविरचित-

रत्नाकरावतारिकाभिधटीकया संयुतम् ।

काशीस्थन्यायविशारदमहामहोपाध्यायश्रीयशोविजय-

नामाङ्कितजैनश्वेताम्बरपाठशालातः

मुम्बयी-

वास्तव्यश्रेष्ठिवर्य्य-चुन्नीलाल-पन्नालाल-साहाय्येन

प्राकाश्यं नीतम् ।

काश्यां

चन्द्रप्रभायन्त्रालये मुद्रितम् ।

वीर संवत् २४३१ ।

मूल्यम् · एकरूप्यकम्

# शोधनपत्रम् ।

| पृष्ठः | पङ्क्ति | अशुद्धम् | शुद्धम् । |
|---|---|---|---|
| १७ | १६ | -टच- | -टश्च- |
| ३४ | ८ | -द्वय- | -द्वच- |
| ३९ | १५ | प्ररूपप्र- | प्ररूप- |
| ४८ | १४ | -यौंः | -र्यः |
| ,, | २३ | दौं- | दौः- |
| ४९ | १५ | परमाण | परमाणव |
| ५२ | २६ | -मुपे- | -मपे- |
| ,, | २७ | -धः | -धम् |
| ५८ | १८ | न्याय | नान्य |
| ६२ | ९ | -स्तुती- | -स्कुती- |
| ६६ | २३ | -मन- | -मान- |
| ६७ | २१ | -ता | -तौ |
| ७५ | २ | -यो | यः |
| ,, | १२ | -यो | यः |
| ,, | १९ | -यो | यः |
| ८० | ४ | -धपरि- | -धेऽपर- |
| ८७ | १९ | -क्कू- | -क्कु- |
| ८८ | १७ | पूनः | पुनः |
| ,, | २३ | -क्षीन्द्रे- | -क्षेन्द्र- |
| ,, | २५ | -का- | -क- |

| पृष्ठः | पङ्क्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ८९ | ३ | -ज्ञाः | -ज्ज्ञाः |
| ,, | ९ | -त | -तं |
| ९० | २१ | म्न् | रन् |
| ९१ | १४ | हेतु पर- | हेतुर- |
| ,, | २० | -ती न- | -तीन- |
| ,, | २३ | -श्र- | -श्रे- |
| ९२ | ७ | -द्य | -द्यं |
| ,, | १३ | -न्नै- | -न्ने- |
| ,, | १६ | -चे- | -च्चे- |
| ९६ | ६ | -भू- | -भृ- |
| ,, | २४ | -पदे | -पंद |
| ९९ | ६ | गृ- | ग्र- |
| ,, | २२ | -ना- | -न- |
| १०३ | २५ | -ता व्या- | -ताव्या- |
| १०९ | १८ | -वन्ते | -वन्त |
| ११२ | १६ | -चोंम | -द्व्योम |
| ११३ | ९ | -बन्ध | -बन्धः |
| ११६ | ९ | -ला- | -ल- |
| ,, | ९ | -ति- | -त- |
| ११७ | ८ | -नान- | -ना- |



श्रीः

श्रीवादिदेवसूरिविरचित

# प्रमाणनयतत्त्वालोकालंकारस्य।

टिप्पणंपञ्जिकाचेतिद्वयालंकृतश्रीरत्नप्रभाचार्यसङ्कलित
रत्नाकरावतारिका नाम्नी लघुटीका।

(रत्नाकरावतारिका।)

सिद्धये वर्द्धमानः स्तात्ताम्रायन्नखमण्डली।
प्रत्यूहशलभप्लोषे दीप्रदीपाङ्कुरायते ॥ १ ॥
यैरत्र स्वप्रभया दिगम्बरस्यार्पिता पराभूतिः।
प्रत्यक्षं विबुधानां जयंतु ते देवसूरयो नव्याः ॥ २ ॥
स्याद्वादमुद्रामपनिद्रभक्त्या क्षमाभृतां स्तौमि जिनेश्वराणां।
सन्न्यायमार्गानुगतस्य यस्यां सा श्री स्तदन्यस्य *पुनः स दण्डः॥ ३ ॥

(टिप्पणम्।)

एकांतमत्तमातंगसिंहमभ्युदयालयम्।
प्रणिपत्यजिनं वीरं सर्वसम्पत्तिकारणम् ॥ १ ॥
गुरूपदेशतः सम्यक् ज्ञात्वाशास्त्रार्थनिर्णयम्।
रत्नाकरावतारिकाटिप्पणं रचयाम्यहम् ॥ २ ॥

इहेष्टदेवतानमस्यानन्तरं सुधियोविधेयमारभेरन्। श्रीरत्नप्रभाचार्य-ईहितार्थसिद्धये विघ्नविनायकोपशान्तये चादौ श्लोकत्रयं रचितवान्।

सिद्धयेइत्यादि। वर्द्धयति गर्भावतीर्णोजनकसदने राष्ट्रादिगजतुरगादिसमृद्धिं विस्तारयतीति वर्द्धमानः सिद्धये ऐहिकसर्वार्थसम्पत्तये मोक्षाय च अनेन वचनातिशयो भगवतः प्रकटीचक्रे नहिसद्गुरूपदेशमन्तरेण सिद्धिःस्यात् अनेनैवज्ञानातिशयो बलादाक्षिप्तएव यतोज्ञानमन्तरेण न सिद्ध्युपदेशः सम्भवति ज्ञानातिशयेन चापायापगमातिशयः प्रसभमभिहितः तदविनाभावित्वात् वर्द्धते चतुस्त्रिंशदतिशयैरशोकाद्यष्टमहाप्रातिहार्यैः समृद्धियुक्तोभवतीति व्याख्यया पूजातिशयोप्याविश्चक्रे शास्त्रादौ

* "स एवे"त्यपिपाठः।

हि भगवतश्चत्वारोतिशयावर्णनीयाः शास्त्रकारेणात्मनश्चतुरतिशयसिद्धयर्थं श्लोकोत्तरपादद्वितयेन जैनमतानुगानामपि जिनपतिपदप्रसादनोपायापगमत्वं सूचयांचक्रे दीप्रदीपाङ्कुरायतेइत्यनेनैतच्छास्त्राध्ययनकारिणामन्तेवासिनां मोहध्वान्तविनाशः सूचितः ॥ १ ॥

यैरत्रेत्यादि । यैः स्वप्रभयानिरुपाधिप्रज्ञया दिगंबरस्य क्षपणककुमुदचन्द्रस्य विदुषां समक्षं पराभूतिः पराभवो दत्तःराजसमाजे महाराजाधिराजजयसिंहदेवसमक्षं जित इत्यर्थः । नव्याइति गुरुस्तुतौ नवनं नवस्तवस्तमर्हन्तीति नव्याः अथ च नव्या मनुष्यावतारत्वात् नवीना बृहस्पतयो बुद्धिवैभवेन तत्समानत्वात् वाचस्पतिना हि स्वकांत्या दिगम्बरस्य महेश्वरस्य परा प्रकृष्टाभूतिः ऋद्धिः समर्प्पिता ईश्वरस्य देवरूपत्वात् बृहस्पतेश्च देवगुरुत्वाद् गुरुणा हि समृद्धिर्दीयतेभक्तजनस्य अथचबृहस्पतिना नास्तिकमतप्रसिद्धशास्त्रसूत्रधारेण देवानांप्रत्यक्षं भस्म समर्प्पितं । नास्तिकेनहि न मन्यते शिवः भस्मसमर्प्पणमतस्तस्योचितम् ॥ २ ॥

स्याद्वादेत्यादि । अपनिद्रभक्त्येति निरतिशयभक्त्या स्याद्वादमुद्रां स्याद्वादमार्गं अन्येषामपि क्षमाभृतां राज्ञां मुद्रा जनैः स्तूयते अथच क्षमाभृतां विन्ध्यादीनां पर्वतानामुच्छृंखलमुच्छ्वसितुमारब्धानां मुद्रा मर्यादा वर्ण्यते मुद्रेतिपदंवावदूकवादव्यपाकरणेन साभिप्रायम् यस्यामिति। स्याद्वादमुद्रायाम् सन्न्यायेति सत्तर्कपद्धतिमाश्रितस्य सेति स्याद्वादमुद्रा श्रीलक्ष्मीहेतुर्भवति वादचत्वरे जयसिद्धिलाभात् । अथचसाऽनिर्वचनीयाश्रीः परमपदप्राप्तिलक्षणा तदन्यस्येति स्याद्वादमुद्राव्यतिरिक्तस्य सएवेति सत्तर्कमार्गएवदण्डः स्यात्तस्यपराजयपात्रत्वात् अथच संसारपतनलक्षणोदण्डः अस्यवक्ष्यमाणशास्त्रस्य स्वाभिमतस्य स्याद्वादमतमवस्थापयितुं पराभिप्रेतैकांतमतमत्यसितुमेव प्रचिक्रंसितत्वादादौ सूचनानिमित्तं श्लोकोत्तरार्द्धसेतदुपन्यस्तम् ॥ ३ ॥

(पञ्जिका ।)

उद्यन्तांशुर्देशनायां पातुवः प्रथमोजिनः ।
परब्रह्मप्रकाशानां वर्णिकामिव दर्शयन् ॥ १ ॥

जयन्तुगौतमाद्यास्ते येऽपवर्गं गता अपि ।
शास्त्ररूपेण देहेनोपकुर्वन्ति जगन्त्यपि ॥ २ ॥

नन्दन्ति गुरवोऽस्माकं वात्सल्यामृतसिन्धवः ।
मलधारिगणाधीशाः श्रीश्रीतिलकसूरयः ॥ ३ ॥

स्याद्वादरत्नाकर इत्यस्तितर्कों महत्तमः ।
वादिवृन्दारकश्रीमद्देवसूरिविनिर्मितः ॥ ४ ॥

श्रीदेवसूरिशिष्येन्द्रैः श्रीरत्नप्रभसूरिभिः ।
तत्र टीका लघुश्चक्रे रत्नाकरावतारिका ॥ ५ ॥
ग्रन्थस्यैतस्य भागौ द्वौ सुगमावन्तराऽन्तरा ।
भागास्त्रयस्तुविषमाः प्रायशो मन्दमेधसाम् ॥ ६ ॥
अतोऽहं विवृतिं तत्र कर्तुमिच्छामि किञ्चन ।
तनोतु मयि सान्निध्यं श्रीमतीभाषितेश्वरी ॥ ७ ॥
व्याख्येयपदमत्यन्तं तद्व्याख्यानन्तु तत्पुरः ।
एषएवक्रमः शास्त्रे सर्वत्रास्मिन् भविष्यति ॥ ८ ॥
आघ्रायपुस्तकं येऽत्रसर्वज्ञाः स्युर्जयन्तिते ।
किञ्चिज्ज्ञजनबोधेन सफलोऽयं ममश्रमः ॥ ९ ॥

ग्रन्थारम्भे शिष्टसमयपरिपालनाय ग्रन्थकृद्देवगुरुसिद्धान्तानां क्रमान्नमस्कारमाह सिद्धये वर्द्धमान स्तात्ताम्रायन्नखमण्डली ॥ प्रत्यूहशलभश्लोषेदीप्रदीपाङ्कुरायते ॥ १ ॥

**सिद्धये इति ।** मोक्षाय प्रारिप्सितकार्यसमाप्तिलक्षणायै वा, । प्रत्यूहा विघ्नाः प्रतिकूलाऊहाश्च । दीप्रदीपाङ्कुरायते इति वर्त्तमाननिर्देशःसाभिप्रायः, तदातनी भगवतो नखमण्डली, इदानीं यावत् दीप्रदीपाङ्कुरायते दीप्रत्वं दीपस्य रात्रावेव शलभश्लोषश्च प्रायेण तदैवेति रात्रिसत्कप्रदीपाक्षेपस्तस्य च माङ्गलिक्याय जायमानत्वात्, यैरत्रेत्यादि देवसूरयः बृहस्पतयः पूज्यत्वात् बहुवचनम्, स्वप्रभया स्वकान्त्या, दिशां अम्बरस्य च, परा प्रकृष्टाभूतिः प्रकाशलक्षणाऽर्पिता, एतच्चापूर्वम् तेषां हि एतावत्सामर्थ्यं न विद्यते, स्वप्रभयेतिप्रतिभया दिगम्बरस्येति कुमुदचन्द्रस्य । पराभूतिरिति पराभवः । विबुधानामिति विदुषां देवानाञ्च । नव्याइति स्तुत्याः अथवानूतनाः ।

**(रत्ना०)-इहहि लक्ष्यमाणाऽक्षोदीयोऽर्थाक्षूणाक्षरक्षीरनिरन्तरे ततइतो दृश्यमानस्याद्वादमहामुद्रामुद्रितानिद्रप्रमेयसहस्रोत्तुंगरंगत्तरंगभंगिसंगसौभाग्यभाजने अतुलफलभरभ्राजिष्णुभूयिष्ठागमाऽभिरामातुच्छपरिच्छेदसंदोहशाद्वलासन्नकाननिकुंजे निरुपममनीषामहायानपात्रव्यापारपरायणपुरुषप्राप्यमाणाप्राप्तपूर्वरत्नविशेषे क्वचन वचनरचनानवद्यगद्यपरंपराप्रवालजालजटिले क्वचन सुकुमारकांतालोकनीयास्तोकश्लोकमौक्तिकप्रकरकरंबिते क्वचिदनेकांतवादोपकल्पितानल्पविकल्पकल्लोलोल्लासितोद्दामदूषणाद्रिविद्राव्यमाणानेकतीर्थिकनक्रचक्रचक्रवाले क्वचिदपगताशेषदोषानुमानाभिधानोद्वर्त्तमानासमानपाठीनपुच्छच्छटाच्छोटनोच्छलदतुच्छशीकरश्लेषसंजायमानमार्त्तण्डमण्डलप्रचण्डच्छमत्कारे**

(टि०)-**क्वचिदपगतेत्यादि । असमानागुरुतरा लक्षणयापरतीर्थिकास्तेषां पुच्छच्छटाच्छोटनेन लक्षणया करास्फालनादिपूर्वं साहंकारवाक्येनोच्छ-**

लद्भिरुल्लसद्भिः श्लेषै रुत्पद्यमानो मार्त्तण्डमण्डले लक्षणयानवद्यविद्यावि-नोदतेजस्विविद्वज्जनचक्रे छमत्कारश्चमत्कारोयत्र

(पं०)—आगमाभिरामेत्यादि । आगमाभिरामं काननपक्षे आगमावृक्षास्तैरभिरामम् । असमानपाठीनेति । अपरिमिता अथवा असमानादीपमाना ये पाठीनाः ।

(रत्ना०)–क्वापि तीर्थिकग्रंथग्रंथिसार्थसमर्थकदर्थनोपस्थापितार्थानवस्थितप्रदीपायमानप्लवमानज्वलन्मणिफणींद्रभीषणे सहृदयसैद्धांतिकतार्किकवैयाकरणकविचक्रचक्रवर्त्तिसुविहितसुगृहीतनामधेयास्मद्गुरुश्रीदेवसूरिभिर्विरचितेस्याद्वादरत्नाकरे नखलु कतिपयतर्कभाषातीर्थमजानंतोऽपाठीना अधीवराश्च प्रवेष्टुंप्रभविष्णव इत्यतस्तेषामवतारदर्शनं कर्त्तुमनुरूपं तच्च संक्षेपतः शास्त्रशरीरपरामर्शमंतरेण नोपपद्यते ।

(टि०)-नखल्विति । अपाठीनाः पठन्तीतिपाठिनोध्ययनकारिणोलेखशालिनस्तेषामिनाः स्वामिनः पश्चान्नञासम्बन्धः । अधीवराइति । नधियाबुद्ध्यावरायेपाठीनाः सहस्रदंष्ट्रामहामत्स्यायेचधीवराः कैवर्त्तीपुत्राः समुद्रे तीर्थमवतारं विदांचक्रुः तएवान्तः प्रवेष्टुमुचितानान्ये तेषामिति । अपाठीनानामधीवराणांच तीर्थदर्शनम् । तच्चेत्यवतारदर्शनम् ।

(पं०)—तिर्थिकग्रन्थग्रन्थीति । ग्रन्थयो विषमस्थानानि । अनुरूपमितियुक्तम् ।

(रत्ना०)–सोपि समासतः सूत्राभिधेयावधारणं विनानेतिप्रमाणनयतत्त्वालोकाख्यतत्सूत्रार्थमात्रप्रकाशनपरा रत्नाकरावतारिकानाम्नी लघीयसी टीका प्रकटीक्रियते । तत्र चेह यत्रक्वचिदपि प्रवर्त्तमानस्य पुरुषत्वाभिमानिनोनेकप्रकारतत्तद्गुणदोषदर्शनाहितसंस्कारस्याह्वाय द्वये स्मृतिकोटिमुपढौकनीया भवन्त्युपकारिणो ऽपकारिणश्च विशेषतो ये यत्र तदभिमततत्त्वावधारणेनारिराधयिषिता स्तदुपहितदोषापसारणेन पराचिकीर्षिताश्च द्वयेपि चामी द्वेधापरापरभेदाद्बाह्यांतरंगभेदाच्चेत्यास्मिन् प्रमाणनयतत्वपरीक्षाप्रवीणे प्रक्रमे कृतज्ञा स्तत्र भवंत स्तेषां प्रागेव स्मृतये श्लोकमेकमेनमचिकीर्त्तन् ।

(टि०)-सोपीति । शास्त्रशरीरपरामर्शः सूत्राभिधेयेति सूत्रार्थावधारणमन्तरेण नोपपद्यतेइति शेषः तत्सूत्रेति स्याद्वादरत्नाकरसूत्राणामर्थं

मात्रप्रकटयित्री यत्रेति प्रमेयादौ प्रवर्त्तमानस्येति प्रमातुः पुरुषत्वमात्मन्यभिमन्यते पुरुषत्वाभिमानी तस्य स्मृतीति स्मरणाग्रंनेयाः विशेषतइति येऽपकारिणोऽपकारिणश्च यत्रेति शास्त्रारम्भादिकार्ये तदभिमतेति उपकार्यभीषृत्वस्य संस्मरणेनाराधायितुमिष्टाः तदुपहीति अपकार्युत्पादि तद्दोषतिरस्कारेण तिरस्कर्त्तुमभिलषिताः परापरेति उपकारिणोद्विविधाः तत्रपरे तीर्थंकरा अपरे गौतमप्रभृतयो गणधरा निजसद्गुरुपर्यवसाना अपकारिणस्तु बाह्या एकान्तमतानुसारिणः सौगतादयः अन्तरङ्गाश्च कामादिषड्वर्गः। यदुक्तं कामः क्रोधश्च लोभश्च मानोहर्षौ मदस्तथा अन्तरंगारिषड्वर्गः सर्वेषामपिकीर्त्तितः॥ १॥ प्रक्रमइति प्रमाणनयतत्त्वालोकाख्यसूत्रव्याख्यारम्भे तत्रभवन्तइति पूज्याः श्रीदेवसूरयः तत्रभवान् भगवानिति शब्दो वृद्धैः प्रयुज्यते पूज्यइति वचनात् तेषामिति द्वेधोपकारिणामपकारिणांच मया तद्व्यतिरिक्तास्मृतिर्नवितन्यते यतस्तत् कृतमेव सूत्रमत्रापिसमासतो विव्रियते अचिकीर्त्तन्निति कृतसंशब्दने चुरात्वादित् अद्यतनीत् णिश्रिदुस्रुकमीत्यादिना चण् कीर्त्तीषोक्तेश्चेति कीर्त्तिरादेशः विकल्पेनइनि चण्परऋवर्णस्य ऋदिति ऋद्भावः द्विर्वचने सिद्धमाचिकीर्त्तन् अर्चीकृतन्वा।

(पं०)—सोऽपीति। शास्त्रशरीरपरामर्शः। अह्नायेति झटित्येव। द्वयेऽपीति पुरुषाः।

**मू०-रागद्वेषविजेतारं ज्ञातारं विश्ववस्तुनः।**
**शक्रपूज्यं गिरामीशं तीर्थेशं स्मृतिमानये॥ १॥**

(रत्ना०)-तीर्थस्य चतुर्वर्णस्य श्रीश्रमणसंघस्येशं स्वामिनमासन्नोपकारित्वेनात्र श्रीमहावीरमहमिह प्रक्रमे स्मृतिमानये इति संटंकः। रागद्वेषयोः प्रतीतयोर्विशेषेणापुनर्जेयतारूपेण जयनशीलमिति ताच्छीलिकस्तृन् ततोकर्तृतृजकाभ्यामिति तृचा षष्ठीसमासप्रतिषेधात्कथमत्रायमितिनारेकणीयम्। तथाविश्ववस्तुनः कालत्रयवर्त्तिसामान्यविशेषात्मकपदार्थस्य ज्ञातारममलकेवलालोकेन शक्राणामिंद्राणांपूज्यमर्चनीयम् जन्मस्नात्राष्टमहाप्रातिहार्यादिसंपादनेन गिरां वाचामीशमीशि-

तारमवितथवस्तुव्रातविषयत्वेन तासां प्रयोक्तृत्वात् । अनेनच विशेषणचतुष्टयेनामी यथाक्रमं भगवतो मूलातिशयाश्चत्वारः प्ररूपितास्तद्यथा अपायापगमातिशयो ज्ञानातिशयः पूजातिशयो वागतिशयश्चेति । एतेनैवच समस्तेन गणधरादेः स्वगुरुपर्यन्तस्य स्मृतिः कृतैव द्रष्टव्या तस्याप्येकदेशेन तीर्थेशत्वान्निगदितातिशयचतुष्टयाधारत्वाच्चेति परापरप्रकारेण द्विविधस्याप्युपकारिणः सूत्रकाराः सस्मरुः ।

(टि०)-नारेकणीयमिति नाशङ्कनीयम् ।

(रत्ना०)–अपकारिणस्तु तथाभूतस्येत्थमनेनैव श्लोकेन स्मृतिमकुर्वन् तीर्थस्य प्रागुक्तस्य तदाधेयस्यागमस्य वा ईंलक्ष्मीं महिमानं वा श्यति तत्तदसद्भूतदूषणोद्घोषणैः स्वाभिप्रायेण तनूकरोति यः स तीर्थेशस्तीर्थांतरीयो बहिरंगापकारी तं किं भूतं शक्रः पूज्योयागादौ हविर्दानादिना यस्य स तथा तं एतावता वेदानुसारिणो भट्टप्रभाकरकणभक्षाक्षपादकपिलाः सूचयाञ्चक्रिरे पुनः किंभूतं तीर्थेशं गिरामीशं वाचस्पतिमिति नास्तिकमतप्रवर्त्तयितुर्बृहस्पतेः सूचा तथागिरांवाचामीं लक्ष्मीं शोभां श्यति य स्तं परमार्थतः पदार्थप्रतिपादनं हि वाचांशोभा तां च तासामपोहमात्रगोचरतामाचक्षाणस्तथागतस्तनूकरोत्येवेति विशेषणावृत्या सुगतोपक्षेपः । पुनः कीदृशंतं ज्ञातारंविश्ववस्तुनः नोऽस्माकंश्वेतभिक्षूणां संबंधि विश्वंवस्तु समस्तजीवादितत्त्वं कर्म्मतापन्नं समानतंत्रत्वात् ज्ञातारमिति दिगम्बरावमर्शः । ज्ञातारमितिच तृन्नन्तमिति तृन्नुदन्तेत्यादिना कर्म्मणिषष्ठीप्रतिषेधः । नन्वेकस्मिन्नेव वक्तरि स्वात्मानंनिर्द्दिशति कथमानये इत्येकवचनं न इति बहुवचनं च समगंसातामिति चेन्नैतद्वचनीयं वचनीयम् ।

(टि०)–तदाधेयस्येति तीर्थतयाभिहिते संघे समारोप्यस्य । एतावतेति भट्टोजैमिनिर्नैष्कर्म्यमीमांसाकृत् प्रभाकरः सकर्म्ममीमांसाकृत् दुर्गासिंहापरनामा कणभक्षो वैशेषिकः अक्षपादो नैयायिकः कपिलः सांख्यः एते सूचिताः परमार्थतइति तत्त्वतः शब्दानामर्थप्रकाशनमेव शोभा नहिनिरर्थकं वाक्यमाभाति कार्यानुपयोगित्वादुन्मत्तविरुतवत् तामिति शोभां

तनूकरोतीति सम्बन्धः तासामिति वाणीनां अपोहेति निर्णयमात्रं अयंघटः पटोनभवतीति सामान्यं नतु विशिष्टस्य परमाणुलक्षणस्वलक्षणस्य वस्तुनो निर्णयः वाणीनां विकल्पाविषयत्वात् स्वलक्षणांतः प्रवेशाभावाच्च यदुक्तं तेनान्यापोहविषयाः प्रोक्ताः सामान्यगोचराः शब्दाश्चबुद्धयश्चैव वस्तु न्येषामसम्भवात् ॥ १ ॥ अस्यव्याख्या तेनाचार्यदिग्नागेनान्यापोह-विषयाविकल्पबुद्धिप्रतिभासाविषयाः शब्दाबुद्धयश्चप्रोक्ताः किं भूताबुद्धयः सामान्यगोचराः सविकल्पिकानतुसर्वा निर्विकल्पाध्यक्षबुद्धीनां वस्तु-विषयत्वांगीकारात्सौगतैरपि बुद्धीनामेवैतद्विशेषणं नतुशब्दानां तेषां सामान्यविषयत्वाव्यभिचारात् विकल्पवत् किंकारणं वस्तुनि स्वलक्षणे एषांशब्दानां विकल्पानांचासम्भवादिति एतदर्थश्च विस्तरार्थिना प्रमा-णवार्त्तिके कल्याणचन्द्रकृतटीकातोज्ञेयः । तथागतो बौद्धः समगंसाता-मिति गम् सम्पूर्वः समोगम्लित्यादिनात्मनेपदं सङ्गच्छतेस्म वचनीयमिति नदूषणं वक्तव्यम् ।

(रत्ना०)--नइत्यत्रापि वक्त्रा स्वस्यैकत्वेनैव निर्देशाद्बहुवचनं त्वेक-शेषवशात् तथाहि तेचान्ये सर्वे श्वेतवाससो ऽहंच प्रचिक्रंसितशास्त्र-सूत्रधारो वयं तेषां नस्त्यदादिरित्यनेनास्मच्छब्दोवशिष्यते बहुवचनंच भवति ततोऽस्माकं श्वेतवासोदर्शनाश्रितानां सर्वेषां तत्त्वं योजानाति तंच स्मरामीत्युक्तं भवति। इत्थंचैकशेषशालिविशेषणं कुर्वाणै स्तच्छब्दो-पदिष्टमार्गस्थाशेषश्वेताम्बरपारतंत्र्यं स्वस्याविश्चक्रे पुनःकीदृशं तं रागद्वे-षविजेतारं । इतं प्राप्तसंबंधमारं सांसारिकानेकक्लेशस्वरूपशत्रुसमूहो यस्मिंस्तीर्थेशे सतथा तंच कथमेतादृशंतामित्याह । रागद्वेषविजा राग-द्वेषाभ्यां कृत्वा यासौविक् श्रीमदर्हत्प्रतिपादितात्तत्त्वात्पृथग्भाव स्तया भगवदर्हत्प्रतिपादितं तत्त्वमनुभवन्तोपि हि रागद्वेषकालुष्यकलंकाक्रांत-स्वांततया परेऽपरथैव प्रलपन्तः सांसारिकक्लेशशात्रवगोचरतां गच्छन्त्येव अनेनचाशेषाणांशेषाणामपि संभवैतिह्यप्रमाणवादिचरकप्रमुखाणामा-विष्करणम् । नखलु मोहमहाशैलूषस्यैको नर्त्तनप्रकारो यदशेषतीर्थि-कानां प्रत्येकं स्मृतिः कर्तुंशक्येत ।

(टि०)-प्रचिक्रंसितेति प्रचिक्रमिषतेतिपाठः प्रारब्धुमिष्टः शास्त्रकर्त्ता

(रत्ना०)–नन्वेवमेतान् प्रतिक्षेपार्थ मुपक्षिपतोऽस्य रागद्वेषकालुष्य-वृद्धिः स्यादिति श्रेयोविशेषार्थ मुपस्थितस्याऽश्रेयसि प्रवृत्ति रापन्नेति शंकां निरसितुं रागद्वेषेति विशेषणं श्लिष्टमजीघटन् अरमत्यर्थं रागद्वेषयोर्विजयनशील स्तेषां स्मृतिमस्मिकरोमि नत्वन्यथेति तत्र भवदभिप्रायः। प्रमाणनयतत्त्वं खल्वत्र शुचिविचारचातुरीपूर्वमालोकनीयम्। न चरागद्वेषकषायितांतःकरणैर्विरच्यमानो विचारश्चारुतामंचतीत्यंतरंगापकारि स्मरणं ननु तथापिकथमेतैर्दिव्यदृग्भिरर्वाग्दृशो ऽस्य तत्त्वविचारः साधीयानित्यारेकामपाकर्त्तु श्लेषेणैवव्यशीशिषन्। ज्ञातारं विश्ववस्तुनः। विमलकेवलालोकालोकितलोकालोकश्रीमदर्हत्प्रतिपादितागमवशात्खल्वहमपि कामं विश्ववस्तूनां ज्ञातैवेति। बृहद्वृत्तौतु स्वकर्तृकत्वान्नामीषामपकारिणां निराचिकीर्षितत्वेन स्मरणं व्याख्यायि। नखलु-महतामीदृश मर्थमित्थं प्रकटयता मौचिती नातिवर्त्तते फलानुमेयप्रारंभत्वात्तेषां सूचामात्रन्तु सूत्रे कतिपयात्यन्तसहृदयहृदयसंवेद्यमविरुद्धमिति। ननु यदिहज्वरप्रसरापसारिशेषाशिरोरत्नोपदेशवदशक्यानुष्टानाभिधेयं जननीपाणिपीडनोपदेशवदनभिमतप्रयोजनं दशदाडिमादिवाक्यवत्सम्बन्धवंध्यंच नतत्र प्रज्ञाचक्षुषः क्षोदिष्टामपि प्रवृत्तिं प्रारभन्ते तद्यदीदमपि तथा नतर्हितेषांप्रवृत्तौनिमित्तं स्यादित्यारेकामधरीकर्तुमचीकृतन्।

(टि०)–नन्वेतानिति परतीर्थिकान्निराकर्त्तुं। उपक्षिपइति उपन्यासं कुर्वतः अस्येति आचार्यस्य। ननुतथापीत्यादि एतैरिति कणभक्षाक्षपादकपिलादिभिः। दिव्येति ज्ञानदृष्टिभिः अर्वागिति जडरूपस्य चर्म्मचक्षुषः अस्येति आचार्यस्य तत्त्वेति प्रमाणविचारः साधुः आरेकामिति आशंकां निराकर्त्तुं व्यशीशिषन्निति स्वविशेषणद्वारेण व्याख्यां चक्रिरे ननुयदिहेत्यादि तत्रेति प्रयोजनादिरहिते शास्त्रे प्रज्ञाचक्षुषइति प्रेक्षावंतो विद्वांसः क्षोदिष्टामपि स्वल्पामपि इदमपीति भवदारभ्यमाणं शास्त्रं तथेति अशक्यानुष्टानप्रयोजनादियुतं निष्कलङ्कं न स्यात्॥ नतर्हीति तेषां विदुषां।

## मू०-प्रमाणनयतत्त्वव्यवस्थापनार्थमिदमुपक्रम्यते इति ।

(रत्ना०)-प्रकर्षेण संशयाद्यभावस्वभावेन मीयते परिच्छिद्यते वस्तु येन तत्प्रमाणं नीयते गम्यते श्रुतप्रमाणपरिच्छिन्नार्थैकदेशो ऽनेनेति नयस्ततो द्वयोरपि द्वंद्वे बह्वच्त्वेपि प्रमाणस्याभ्यर्हितत्वेन लक्षणहेत्वोरित्यादिवदल्पाच्तरादपिनयशब्दात्प्रागुपादानं ततः प्रमाणनययोस्तत्त्वमसाधारणं स्वरूपं तस्यव्यवस्थापनं यथावस्थिततत्त्वनिष्टङ्कनं तदेवार्थः-प्रयोजनं यत्रोपक्रमणे तत्तदर्थमितिक्रियाविशेषणमेतत् नपुनरिदमितिनिर्दिष्टस्य शास्त्रस्य आचार्योहि शास्त्रेण कृत्वा प्रमाणनयतत्त्वं व्यवस्थापयतीत्याचार्यव्यापारस्यैवोपक्रमस्य तद्विशेषणमनुगुणं ।

(टि०)-प्रकर्षेणेत्यादि संशयादीति आदिशब्दाद्विपर्ययानध्यवसायौ ज्ञेयौ- बह्वच्त्वेपीति बहुस्वरत्वेपि अभ्यर्हितेति पूजितत्वात् अल्पाच्तरादिति स्तोकस्वरात् अच्शब्दः स्वरसंज्ञयाव्याकरणप्रसिद्धः ।

(पं०)—बह्वच्त्वेपीति बहुस्वरत्वेपि ।

(रत्ना०)—नतु शास्त्रस्य तस्य करणतयैव तत्रोपयोगात् कर्तृत्वस्य तत्रौपचारिकत्वात् । इदंस्वसंवेदनप्रत्यक्षेणान्तस्तत्त्वरूपतया प्रतिभासमानं प्रकृतं शास्त्रमुपक्रम्यते । बहिः शब्दरूपतया प्रारभ्यते । इदं च वाक्यं मुख्यतया प्रयोजनमेव प्रतिपादयितुमुपन्यस्तं तस्यैवप्राधान्येन प्रवृत्त्यङ्गत्वात् । अभिधेयसम्बन्धौतुसामर्थ्याद्गमयाति तथाहि । प्रमाणनयतत्त्वमभिधेयंप्रमाणनयतत्त्वेत्यवयवेनलक्षितं सुखानुष्ठेयंचैतदित्यशक्यानुष्ठानाभिधेयाशङ्का निराकारि प्रयोजनं द्वेधा कर्तुः श्रोतुश्च तत्र कर्तुः प्रयोजनं प्रमाणनयतत्त्वनिश्चयव्यवस्थापनं प्रमाणेत्यादिसूत्रावयवेनण्यन्तेन साक्षादाचचक्षे श्रोतृप्रयोजनं च व्यवस्थेत्युपसर्गधातुसमुदायेनैव तदन्तर्गतं प्रत्याय्यते । प्रमाणनयतत्त्वनिश्चयमिच्छवोहि श्रोतारोऽस्मथमिक्या ऽत्र शास्त्रेप्रवर्त्तेरन् अभिमतञ्चैतत्प्रयोजनं द्वयोरपीत्यनभि-

मतप्रयोजनत्वारेकानिरस्ता । सम्बन्धस्त्वभिधेयेन सह वाच्यवाचकभावलक्षणः शास्त्रस्यावश्यम्भावीत्यनुक्तोऽप्यर्थाद्गम्यते इति सम्बन्धरहितत्वाशङ्कानुत्थानोपहतैवेति ।

(टि०)-ननुशास्त्रस्येत्यादि तत्रेति व्यवस्थापने तत्रेतिशास्त्रे इदमिति शास्त्रं हि द्विविधं अर्थतः शब्दतश्च अन्तरर्थरूपं बहिः शब्दरूपं तत्त्वरूपेति ज्ञानरूपतया तस्येति प्रयोजनस्य मुख्यत्वेन प्रवृत्तिहेतुत्वात् तदन्तर्गतमिति आचार्यप्रयोजनान्तर्गतं प्रत्याय्यते प्रतीतिगोचरंनीयते ।

(पं०)—अन्तस्तत्त्वरूपतयेति शास्त्ररूपतया ।

(रत्ना०)-अत्रधर्मोत्तरानुसारी प्राह। प्रयोजनमादिवाक्येन साक्षादाख्यायतइति न क्षमे यतः सम्बद्धमसम्बद्धंवा तत्तदभिदधीत यद्यसम्बद्धमेव तदादिवाक्यादेवसमस्तशास्त्रार्थसन्दर्भगर्भाविर्भावसम्भवात्किंप्रकृतशास्त्रोपक्रमक्लेशेन । सम्बद्धं चेत्तदसम्बद्धशब्दार्थयोः सम्बन्धासम्भवात् तथाह्ययमनयोर्भवंस्तादात्म्यं तदुत्पत्तिर्वाच्यवाचकभावो वा भवेत् । प्राचीनपक्षेसएवात्मा यस्येति विग्रहे किंतच्छब्दस्य शब्दएव तदर्थोवा वाच्यतया त्वच्चित्ते चकास्यात् यदिशब्दस्तर्हिसमस्ताअप्यर्थाः स्वस्ववाचकस्वभावा बभूवांसइति युगपदशेषाणां तेषां निःशेषकालं यावद्गुमगुमायमानतापत्तेरयत्नोपनतपणववेणुवीणामृदङ्गसङ्गसङ्गीतकारंभनिभृतमिव त्रिभुवनं भवेत् । अथतदर्थस्तर्हितुरगतरङ्गशृङ्गारभृङ्गारादिशब्दोच्चारणे चूरणप्लावनसम्भोगघट्टनादिप्रसक्तिः । किंचातीतानागतवर्द्धमानपद्मनाभादिकल्पितकथादिवचसामुच्चारणमचतुरस्रंस्यात् । नहि वृक्षात्मा शिंशपा तमन्तरेणापि क्वापि सम्पद्यते। तथात्वे हि स्वरूपमेवासौ जह्यात् कुम्भस्तम्भाम्भोरुहादिवत् प्रत्यक्षमपिचैतयोस्तादात्म्यं न क्षमते कर्णकोटरकुटुम्बी खल्वभिलापः प्रत्यक्षेण लक्ष्यते क्षितितलावलम्बी तु कलशकुलिशादिर्भावराशिरिति कथमनयोरैक्यं शक्येत वक्तुं तन्न तादात्म्यपक्षोपक्षेपः सूक्ष्मः ।

(टि०)-अत्रधर्मोत्तरेत्यादि तदिति आदिवाक्यं तादिति प्रयोजनं सम-

स्तशास्त्रेति लक्षणसाहित्यतर्कादि तथाहीत्यादि अयमितिसम्बन्धः अनयोरिति शब्दार्थयोः विग्रहे इति समासेतादात्म्यशब्दादिप्रयुक्तेतच्छब्दस्य शब्दएव वाच्यः। तदर्थोवेति शब्दार्थोवा यदिशब्दइति तच्छब्दवाच्यश्चेच्छब्दः स्वस्ववाचकेति आत्मानमात्मनाख्यापयेयुः शब्दात्मकत्वादर्थानां। अथतदर्थइति तच्छब्दवाच्यश्चेदर्थः किञ्चेति अतीतकथानामुच्चारणमयुक्तं स्यात्। नहीतिशिंशपाशब्दः तामिति वृक्षपदार्थमन्तरेण तथात्वेइति अवृक्षत्वे स्वरूपमिति शिंशपात्वं असाविति शिंशपा कुम्भस्तम्भेति यदास्तम्भः स्तम्भस्वरूपएव न स्यात् तदापदार्थहानिरेवभवेत् तस्यासत्वात्खपुष्पवत्।

(पं०)—तत्तदभिदधीतेति तदादिवाक्यं कर्तृ तत्प्रयोजनं कर्म। आदिवाक्यादेवेति एतस्मादेव। अनयोरिति शब्दार्थयोः। तदर्थोवेति तदभिधेयोघटादिः। चकास्यादिति प्रतिभासेत। स्वस्ववाचकस्वभावाइति स्वंस्ववाक्यं प्रति वाचकस्वरूपाः। बभूवांसइति भूताः। निभृतमिति निश्चलम्। तदर्थइति शब्दोऽर्थात्मकः। चतुरस्रमिति शोभनम्। तमन्तरेणेति वृक्षात्मानमन्तरेण। तथात्वेहीत्यादि यदि वृक्षात्मानमन्तरेणापि शिंशपाभवेत्। अभिलाप इति शब्दः। प्रत्यक्षेणेति श्रोत्रेण। कथमनयोरैक्यमिति एकः शब्दः आगत्यकर्णयोर्लगति। अर्थस्तुक्षातितलावलम्बी तथैव तिष्ठति। अतः कथमनयोस्तादात्म्यमित्यर्थः।

(रत्ना०)-तदुत्पत्तिपक्षेपि किम् शब्दादर्थउन्मज्जेदर्थाद्वाशब्दः प्राचिकविकल्पे कलशादिशब्दादेव तदर्थोत्पत्तेर्नकोपि सूत्रखण्डदण्डचक्रचीवरादिकारणकलापमीलनक्लेशमाश्रयेत्। प्रयोजनवाक्यमात्रादेव च तत्प्रसिद्धेः प्रक्रतशास्त्रारम्भाभियोगोपि निरुपयोगः स्यात्। द्वितीये पुनरनुभवबाधनमधररदनरसनादिभ्यः शब्दोत्पत्तिसंवेदनात्। वाच्यवाचकभावपक्षोपि न क्षेमकारः। यतोसौ वाच्यवाचकयोः स्वभावभूत स्तदतिरिक्तो वा भवेत्। आद्यभिदायां वाच्यवाचकावेव न कश्चिद्वाच्यवाचकभावोनाम सम्बन्धः द्वितीयभिदायान्तु वाच्यवाचकाभ्यामेकान्तेन भिन्नोसौस्यात् कथञ्चिद्वा। आद्यभेदे भेदत्रयं ढौकते किमयं

नित्यो ऽनित्योनित्यानित्योवेति नित्यश्चेत् सम्बन्धिनोरपि नित्यतापत्ति रन्यथा सम्बन्धस्याप्यनित्यत्वाऽनुषङ्गात् तत्सम्बन्धिसम्बद्धसम्बन्धस्वभावप्रच्युतेः । अथानित्यस्तदासर्ववाच्यवाचकेष्वेकः प्रतिवाच्यवाचकम्भिन्नोवा एकश्चेत्तर्ह्येकस्मादेव शब्दादशेषपदार्थप्रतिपत्तिप्रसङ्गः । द्वितीयपक्षेतु किमसौ तत्र सम्बद्धोऽसम्बद्धोवा भवेत् । असम्बद्धश्चेत्तर्हि घटशब्दादपि पटप्रतीतिः स्यात् पटशब्दाच्च घटप्रतीतिर्द्वयोरपि वाच्यवाचकभावयोरुभयत्राविशेषात् । अथसम्बद्धस्तादात्म्येन तदुत्पत्त्यावा । नतावत्तादात्म्येन भेदपक्षकक्षीकारात् । नापितदुत्पत्त्या । यतः किमयं वाच्योत्पत्तिकाले जायेत १ वाचकोत्पत्तिकाले २ युगपदुभयोरुत्पत्तिकाले ३ एकस्य प्रथमसुत्पादेपि यदैव च द्वितीय उत्पद्यते तदैववा । ४। नाद्यौपक्षावक्षुण्णौ द्वयाधारत्वेनास्यान्यतरस्याप्यसत्तायामुत्पत्तिविरोधात् । तार्त्तीयीकविकल्पेतु क्रमेणोत्पादिष्णवः पदार्थाः शब्दाश्च अवाच्या अवाचकाश्च भवेयुः । तुरीयपक्षेतु किमसौ वाच्यवाचकाभ्यामेव सकाशादुल्लसेदन्यतएवान्यतोपिवा । आद्यकल्पनायामनाकलितसङ्केतस्यापि नालिकेरद्वीपवासिनः शब्दोच्चारणानन्तरमेव पदार्थप्रतीतिः स्यात्तदानीमेव तस्योत्पादात् ।

(टि०)-तदुत्पत्तीत्यादि प्रयोजनेति आदिवाक्यादेव वाच्यार्थप्रयोजनसिद्धेः तत्प्रसिद्धेरिति प्रयोजनप्रसिद्धेः यतोसाविति सम्बन्धःशब्दार्थयोः स्वभाव इति अभिन्नः तदतिरिक्तोवेति भिन्नोवा । असाविति सम्बन्धः अन्यथेति सम्बन्धिनोरनित्यतायां । तत्सम्बन्धीति तौचसम्बन्धिनौ च तत्सम्बन्धिनौ तत्सम्बन्धिभ्यां यः सम्बद्धः स्वभावः तत्प्रच्यवनात्तस्यभ्रंशात् अथचतैः सम्बन्धिभिः सह यः सम्बद्धसम्बन्धभावस्तस्यपतनात् असाविति सम्बन्धः तत्रेति पदार्थे भेदपक्षेति तावत्तादात्म्यमभिन्नभिदङ्गीकारेजाघटीति न भिन्नपक्षे सर्वथाभिन्नत्वात् नालिकेरकपित्थवत् अत्रापि प्राज्ञेन भिन्नप्रकारस्वीकारपरेण वरीवर्त्यते । तार्त्तीयीकेति युगपदुभयोरुत्पत्तिकालस्वीकारात् क्रमोत्पत्तिविरोधः असाविति सम्बन्धः अन्यत इति सङ्केतात् अन्यतोपीति सङ्केतात्अपिशब्दाद्वाच्यवाचकाभ्या-

मपि सकाशात् अनाकलितेति नालिकेरद्वीपवासी नालिकेरमन्तरेणघटादिपदार्थसार्थं नमनुते व्यवहारबाह्यत्वात्तस्य तदानीमिति तस्यवाच्यस्य दर्शनएव। तस्येति सम्बन्धस्य।

(पं०)—अन्यथा सम्बन्धस्याप्यनित्यत्वानुषङ्गादिति चेत् सम्बन्धिनौ नित्यौ न भवतः। तत्सम्बन्धिसम्बद्धसम्बन्धस्वभावप्रच्युतेरिति तौ च तौ सम्बन्धिनौ वाच्यवाचकौ तत्सम्बद्धत्वलक्षणः सम्बन्धस्य स्वभावस्तस्य प्रच्युतिः। तत्रेति वाच्यवाचकयोः। वाच्यवाचकभावयोरिति वाच्यवाचकसम्बन्धयोः। उभयत्राविशेषादिति उभयत्रघटे पटेवाऽसम्बद्धत्वाविशेषात्। अन्यतरस्याप्यसत्तायामिति द्विष्ठसम्बन्धसम्वित्तिर्नैकरूपप्रवेदनात्। अन्यतोऽपिवेति वाच्यवाचकाभ्यामप्यन्यतोऽपि। पदार्थप्रतीतिः स्यादिति स्यादिति वाच्यवाचकसम्बन्धस्य प्रतीतिर्भवेत्।

(रत्ना०)—अथोत्पन्नोप्यसौ सङ्केताभिव्यक्तएव वाच्यप्रतिपत्तिनिमित्तं ननुकार्यकारणभावविशेष एवाभिव्यंग्याभिव्यञ्जकभावस्तत्रचान्यतोपीति विकल्पप्रतिविधानमेव समाधानं। अथान्यतः सङ्केतादेवायमुत्पद्यते। तदप्यवद्यम् तदाधारस्य धर्मस्यान्यतएवोत्पत्तिविरोधात् नचैवं वाच्यवाचकयोस्तदुत्पत्तिसम्बन्धोऽस्य कथितः स्यात् अथसङ्केतसहकृताभ्यां वाच्यवाचकाभ्यामेषजायते इत्यर्थवानन्यतोपीति तृतीयः पक्षः कक्षीक्रियते। नन्वसौ सङ्केतः प्रतीते वस्तुनि विधीयेताऽप्रतीते वा। नतावदप्रतीतेऽतिप्रसङ्गसङ्गतेः। नापिप्रतीते यतस्तत्क्षणिकत्वेन तदानीमेव खरसमीरसमीरिताम्भोधरध्वंसमध्वंसिष्टेति कुत्र सङ्केतः क्रियेत। अथ तत्समानजातीयक्षणपरम्पराया विद्यमानत्वात् कथं न सङ्केतगोचरता तस्य तदसन्नखल्वप्रतीतं विद्यमानमपि शब्दगोचरीभूयमुपनेतुं शक्यमतिप्रसक्तेः। यच्च प्रथमं प्रतीतं तत्तदानीमेव व्यतीतं। एवंशब्दोपि गवादिः प्रतीतो ऽप्रतीतोवा तत्रसङ्केत्येतेति प्राग्वद्दोषाः सङ्केताभावेच कथं वाच्यवाचकभावोत्पादः। स्तां वा ते शब्दार्थव्यक्ती क्षणिकत्वपराङ्मुखेउत्पादयतांच सङ्केतसहकृते वाच्यवाचकभावम् किन्तु न ते एव व्यवहारकालमनुगच्छत इत्यर्थान्तरे शब्दान्तरेच वाच्यवाचकभावोत्पत्तये

सङ्केतान्तरं कर्त्तव्यम् । तथाचव्यवहाराभाव एव भवेत् । प्रतिवाच्यवाचकविशेषं सङ्केतकर्त्तुरवश्यम्भावाभावात् ।

(टि०)-तदाधारस्येति वाच्यवाचकाधारस्य धर्म्मस्येति सम्बन्धस्य अन्यत इति सङ्केतात् अतिप्रसङ्गेति देशकालविप्रकृष्टेपिसङ्केतप्राप्तेः तत्क्षणिकेति तद्वाच्यं तस्येति वाच्यस्य नखल्वप्रतीतमिति प्रतीतविनाशानन्तरोत्पन्नासमानजातीयक्षणपरम्परा विद्यमानापि प्रतीतैव सा शब्दगोचरा नस्यात् अतिप्रसक्तेरिति देशविप्रकृष्टसङ्केतप्राप्तेः एवंशब्दइति प्रतीताऽप्रतीतार्थवत्प्रतीताप्रतीतशब्देपि दोषोद्भवनम् भावनीयं स्तांवेति भवेताम् क्षणिकत्वेति अक्षणिकेस्थिरइत्यर्थः । तेएवेति शब्दार्थव्यक्ती सङ्केताभावात्पूर्वसङ्केतः पूर्वार्थदर्शनेनैव साकं विनष्टइति भावः ।

(पं०)—तदाधारधर्म्मस्येति तौ वाच्यवाचकावाधारोयस्येति विग्रहः । अतिप्रसङ्गसङ्गतेरिति देशकालविप्रकृष्टेऽपि सङ्केतप्राप्तेः । अतिप्रसक्तेरिति देशादिविप्रकृष्टेऽपि सङ्केतप्राप्तेः । किन्तुनते एवव्यवहारकालमित्यादि । ते इति ते शब्दार्थव्यक्ती अत्रचकाक्वाव्याख्या ।

(रत्ना०)-अथ सामान्यगोचर एव सङ्केतः क्रियते । तदेवच वाच्यवाचकभावाधिकरणम् कालान्तरव्यक्त्यन्तरानुसरणनैपुण्यधरं च नित्यत्वाद्व्यक्तिनिष्ठत्वाच्चेतिचेत्तन्नमनीषिमान्यं सामान्यस्याभावात् । कथं प्रतिभासभाजनमपि तन्नास्तीतिचेत् न तत्प्रतिभासासिद्धेः । तथाहि दर्शने [1]परिस्फुटत्वेनासाधारणमेव रूपं प्रथते नसाधारणम् अथ साधारणमपि रूपमनुभूयते । गौर्गौरिति तदसाधीयः शावलेयबाहुलेयादितीव्रतीव्रतरगोशब्दादिरूपविवेकेन तस्याप्रतिभासनात् । नचशावलेयादिरूपमेवसाधारणं प्रतिव्यक्तिभिन्नरूपोपलम्भात् । यदिच सामान्याधार एव वाच्यवाचकभावस्तदा न शब्दात्प्रवृत्तिः स्यात् ज्ञानमात्रलक्षणत्वात सामान्यार्थक्रियायास्तस्याश्च तदैवनिष्पन्नत्वात् । अथापि सामान्यविशेषोभयाधारोऽसौ स्यात् तदापि तदेव दूषणम् । प्रत्येकं योभवेद्दोषो द्वयोर्भावे कथंनस इति वचनात् । अथ-

१ परिस्फुटमसाधारणमेवेत्यपि पाठान्तरम् ।

कथमिदं भवेन्नहि स्वतन्त्रौ सामान्यविशेषौ तदधिकरणमभिदध्महे । किन्तुतदुभयात्मकत्वेन जात्यन्तररूपं प्रत्यक्षप्रतीतिसिद्धं कथञ्चिदनुगमव्यावृत्तिमद्वस्त्विति चेत् । तदिदमपूर्वं किमपिकपटनाटकपाटवप्रकटनम् सामान्यविशेषोभयात्मकत्वस्य दुर्द्धरविरोधानुबन्धदुर्गन्धत्वात् । एतेनैवच कथञ्चिद्भेदनित्यानित्यत्वपक्षावपि प्रतिक्षिप्तौलक्षयितव्यौ । तन्नादिवाक्यं साक्षात्प्रयोजनं जल्पितुमलं नहिशब्दाः श्वपाकाइव वराकाः स्वलक्षणं ब्राह्मणम् क्षणमपि स्प्रष्टुमर्हन्ति । विकल्पशिल्पिकल्पितार्थमात्र गोचरत्वात् तेषां विकल्पानांचोत्प्रेक्षालक्षणव्यापारपर्यवसितत्वात् । तदुक्तम् विकल्पयोनयः शब्दा विकल्पाः शब्दयोनयः कार्यकारणता-तेषां नार्थं शब्दाः स्पृशन्त्यपि । १ । तदेतदखिलमनिलान्दोलितार्कतूलतरलम् ।

(टि०)-तदेवेति सामान्यम् कालान्तरेति विशेषभावाधिगामुकम् सामान्यं हि नित्यं कालान्तरे व्यक्तिगामुकंच सामान्यस्येति सामान्यम् नमन्यन्ते बौद्धाः केवलविशेषाङ्गीकारात् तथाहीत्यादि दर्शनइति निर्विकल्पकप्रत्यक्षे प्रत्यक्षविषयस्य विविक्तपरस्परनिरपेक्षस्वलक्षणस्य तथागतैः प्रतिपन्नत्वात् अथसाधारणमिति प्रथमसामान्यदर्शने लोकव्यवहारोक्तौ-वा विवेकेनेति विशेषरूपपरिज्ञानेन । तस्येति साधारणस्य । प्रतिव्यक्तीति व्यक्तौ २ श्वेतकृष्णरक्तरूपादिप्राप्तेः प्रवृत्तिरिति चाह दोहादिका क्रिया । ज्ञानमात्रेति सामान्यं ज्ञानमात्रं नत्वर्थक्रियासाधकं विशेषः क्रियाहेतुर्जैनैरप्यभ्युपगतः । तस्याइति सामान्यार्थक्रियायाः तदेवेति प्रथमगवादिदर्शनसमये वस्त्वनिश्चये असाविति वाच्यवाचकभावसम्बन्धः तदेवेति यत्सामान्याधारे दूषणं विशेषाधारे तदेव सामान्यविशेषोभयाधारे तदेव स्वतन्त्राविति परस्परनिरपेक्षौ स्वच्छन्दावित्यर्थः । तदधिकेति वाच्यवाचकभावसम्बन्धाधिकरणं नाभिदध्महे नप्रतिपादयामः वैशेषिकादिवत् । तदुभयेति सामान्यविशेषात्मकत्वेन नकेवलं सामान्यं नकेवला-विशेषा अतएव जात्यन्तरं सामान्यस्य विशेषाणांचानुभवात् प्रत्यक्षसिद्धं कथञ्चिदिति अयंघटइत्यनुगमः घटः पटाद्व्यावृत्तइति व्यावृत्तिः तद्वत्

विकल्पशिल्पीति शिल्पीमलिनजातीयः कारुरिति साभिप्रायं शिल्पीहि पदार्थंरचयति तेषामिति शब्दानां तदेतत् सकलं निष्फलं कथञ्चित्तादात्म्यस्य शब्दार्थयोः स्वीकारात् नात्रविरोधावरोधः मोदकाचलकरवालाद्युच्चारणमात्रेपि वदनपूरणचूरणपाटनाद्युपपातः स्यात् सचनदृश्यते ऽतो भेदः मोदकाद्युच्चारणेन पदार्थप्रतीत्याऽभेदः अथानेकार्थत्वाच्छब्दानां कथंप्रतिनियतपदार्थप्रत्ययइतिचेद्विवक्षातोहि शब्दानां प्रवृत्तिर्नतुस्वच्छन्दतः अपिच यदिनकश्चित्सम्बन्धः तत्परमाणुरित्युक्ते स्वलक्षणं कथमभ्युपगम्यते सौगतैः वेद्यवेदकभावादिति चेद्वाच्यवाचकभावात् शब्दार्थयोरपि प्रत्ययः स्यात् विस्तरोन्यायावताराद्वसेयः। सूरयस्तु भङ्ग्यन्तरेण उत्तरयाञ्चक्रुः।

(पं०)—तदेवनिष्पन्नत्वादिति तदैवज्ञानमात्र असाविति वाच्यवाचकभावः। उत्प्रेक्षालक्षणव्यापारपर्यवसितत्वादिति आरोपलक्षणव्यापारपर्यवसितत्वात्।

(रत्ना०)—यतएवंवदतस्ते किमादिवाक्योपक्षेपप्रतिक्षेपः काङ्क्षितः किंवा कारणान्तरं किमपि तत्करणेस्तीति विवक्षितं नाद्यः पक्षस्तत्र तत्र तावकैस्तस्य करणात्। नाप्युत्तरस्तस्य कस्यचिदसत्त्वात्। अथास्त्येव प्रयोजनार्थि प्रवृत्तिनिमित्तार्थसन्देहोत्पादनं तत् तथाहि। प्रेक्षितप्रयोजनवाक्यानां प्रयोजनार्थिनां तदुपदर्शितप्रयोजनभावाभावपरामर्शपरः संशयः समाविर्भवति ततोऽपि च संशयतः सस्यसम्पत्त्यादिफले कृष्यादौ कृषीबलाइव ते तत्र प्रवर्त्तन्त इति चेत् तदप्राज्यं प्रयोजनवाक्योपन्यासात् प्रागप्यस्यसाधकवाधकप्रमाणाभावेन भावात्। अथ तदासौ प्रयोजनसामान्ये सत्त्वासत्त्वाभ्यां संशयः। प्रमातारश्च प्रायः प्रयोजनविशेषार्थिन एवेति तद्विषयसंशयोत्पादनाय युक्तमेवेदमिति चेत् नास्यापि प्रागेवभावात्। तथाहि। प्रमाता शास्त्रमात्रमप्यालोक्यानुभूतप्रयोजनविशेषेण शास्त्रेणास्य वर्णपदवाक्यकृतसाधर्म्यमवधार्य च किमिदमपिसप्रयोजनमप्रयोजनं वा। सप्रयोजनमपि किमस्मदभिमतेन तेन तद्वत्किंवान्येनेत्यादि वाक्यालोकनं विनापि सन्दिग्धे। अपिच। त्वन्मते न ध्वानिरर्थाभिधानधुरां दधाति। तत्कथंप्रयोजनविशेषविषयसन्देहोत्पादनेपि प्रत्यलः स्यात्।

(टि॰)—यतएवमित्यादि किंवेति आदिवाक्यकरणे आचार्यकल्पित-प्रयोजनादन्यत् कारणमस्तीतितिवक्तुमिष्टं तस्येति आदिवाक्यस्य नापि-तस्येति कारणान्तरस्य तादिति कारणान्तरं प्रेक्षितेति शास्त्रान्तरे विलोकितादिवाक्यानां तदुपेति तेनादिवाक्येनोपदर्शितं तत्रेति शास्त्रे अर्थ-संशयः प्रवृत्त्यङ्गं अनर्थसंशयस्तुनिवृत्त्यङ्गं प्रयोजनेत्यादि अस्येति संशयस्य असाविति संशयः सत्त्वेति अस्तिनास्तिवेति सन्देहः तद्विषयेति प्रयोजनगोचरसन्देहोत्पादनाय। इदमित्यादिवाक्यं अस्यापीति एवंविधस्यापि संशयस्य प्रमातेत्यादि अस्येति शास्त्रस्य साधर्म्यमिति समानतां अस्मदिति विशेषशास्त्रेणसह तद्वदिति प्रयोजनवत् सन्दिग्धेइति सन्देहंकुरुते।

(पं॰)—संशयः समाविर्भवतीति अर्थसंशयोऽपि प्रवृत्यङ्गं अनर्थसंशयोऽपि निवृत्यङ्गम्। अस्येति प्रयोजनभावाभावस्य। अस्मदभिमतेन तेन तद्वदित्यत्रतेनेति प्रयोजनेन। तद्वदिति प्रयोजनवत्। सन्दिग्धेइति सन्देहं कुरुते। प्रत्यलः स्यादिति ध्वनिः।

(रत्ना॰)—अर्घटचर्चचतुरः पुनराह इह प्रेक्षावतां प्रवृत्तिः प्रयोजनवत्तया व्याप्ता ततो यन्निष्प्रयोजनं न तत्तैरारम्भणीयम्। यथाकाकदन्त परीक्षा। तथाचैतदितिशास्त्रारम्भप्रतिषेधायप्रयुज्यमानाया व्यापकानुपलब्धेरसिद्धतोद्भावनार्थमादिवाक्यंकर्त्तव्यमितितदप्यनुपपन्नं वाक्यस्यप्रमाणत्वेनाऽनवस्थिततया प्रयोजनविशेषसद्भावप्रकाशनसामर्थ्य-शून्यत्वात् तदसिद्धिसुद्भावयितुमपर्याप्तत्वात्।

(टि॰)-तथाचेति निःप्रयोजनं। एतदिति प्रकृतशास्त्रं व्यापकेति इह-प्रतिषेध्यमानमारम्भणीयत्वं तस्य व्यापकं प्रयोजनवत्त्वं तस्यानुपलब्धि-र्निःप्रयोजनत्वादितिहेतुनोक्ता व्यापकं निवर्त्तमानंहि व्याप्यमादाय निवर्त्तते प्रयोजनवत्त्वंच व्यापकं तन्निवर्त्तनेआदिवाक्यस्यापिवैयर्थ्यप्रसङ्गात्। आदिवाक्यमिति तादात्म्यतदुत्पत्तिलक्षणसम्बन्धाविकलतयादिवाक्यस्याप्रमाण्यं सर्वसौगतसम्मतमेवातः प्रमाणरहितमप्यादिवाक्यं विधेयं

वाक्यस्येत्यादि प्रमाणेति प्रामाण्येननिश्चयाभावात् । तदसिद्धिमिति व्यापकानुपलब्ध्यसिद्धिमपि ।

(पं०)—व्यापकानुपलब्धेरिति । इहप्रतिषेध्यमारम्भणीयं तस्यव्यापकं प्रयोजनवत्त्वं तस्यानुपलब्धिर्निष्प्रयोजनत्वादिति हेतुनोक्ता । तदसिद्धिरिति व्यापकानुपलब्धेरसिद्धिः ।

(रत्ना०)—रामटस्तुप्रकटयति । यद्यपीदंवाक्यमप्रमाणत्वात् प्रयोजनोपस्थापनाद्धारेणनिष्प्रयोजनत्वसाधनमसिद्धंविधातुमधीरं । तथापि विदग्धंसन्दिग्धंकर्तुंसन्दिग्धासिद्धमपिचसाधनमगमकमेव । यथासमुच्छलदुद्धवलधूलिपटलं धूमत्वेन सन्दिह्यमानं धनञ्जयस्येति । तदप्यशस्तमनुपन्यस्तेऽपिप्रयोजनवाक्येऽनुभूतपूर्वप्रयोजनविशेषशास्त्रान्तरसाधर्म्यदर्शनेन शास्त्रमात्रादपि निष्प्रयोजनत्वगोचरसन्देहस्य सद्भावात् । ननुयद्येवमादिवाक्यं पराक्रियते नतर्हीदं भवद्भिरपि कर्त्तव्यमितिचेत् नैवं । कर्त्तव्यञ्चतम्प्रति योनान्यथाप्रयोजनं विदाञ्चकार । वाच्यवाचकोत्पत्तिसमयसम्भूष्णुशक्तिस्वभावस्याबाधिततथाऽनुभवेन चित्रज्ञानरूपस्पष्टदृष्टान्तावष्टम्भेन च कृतविरोधपरिहारत्वान्नित्यानित्यस्यवाच्यवाचकाभ्यां कथञ्चिद्भिन्नस्य सामान्यविशेषोभयस्वभाववस्तुगोचरोपरचितसङ्केताभिव्यक्तस्य वाच्यवाचकभावसम्बन्धस्य बलेन शब्दानामर्थस्य प्रतिपादकत्वं प्रतिपद्य प्रामाण्यं चाङ्गीचकार । एतच्च यथास्थानं समर्थयिष्यते । यःपुनरन्यथापिप्रयोजनमजानाद्यश्च न शब्दविशेषं प्रमाणत्वेनामंस्त तौप्रति नकर्त्तव्यञ्चेत्यनेकान्तो विजयते ।

(टि०)—साधनमिति हेतुं अगमकमिति अनिश्चायकं धनञ्जयस्येति वह्नेः तदपीत्यादिनोत्तरयति जैनः । यद्येवमिति संशयोत्पादकानभ्युपगमेन निराक्रियते यतोनेन संशयोत्पादनमन्तरेण नकिमपि प्रयोजनं कर्त्तव्यञ्चेत्यादि अन्यथेति यःश्रोता आदिवाक्यं विना यः प्रमाण्यं चाङ्गीचकारेति वाक्यसमन्वयः चित्रज्ञानेति पञ्चवर्णोल्लेख्यज्ञानं वाच्यवाचकेति एतद्विशेष्यपदं प्राच्यानि षष्ठ्यन्तान्यस्यविशेषणानि प्राक्सुगतकल्पितोत्तरसूचकानि । प्रमाण्यमिति शब्दानामेव ।

(पं०)—**विदाञ्चकारेति** यः प्रामाण्यञ्चाङ्गीचकारेति वाक्यसमन्वयः। **शक्तिस्वभावस्येति** शक्तिस्वभावविशेषस्य। **चित्रज्ञानरूपस्य दृष्टान्तावष्टम्भेनेति** सौगताभिमतेन यथैकस्मिन् चित्रपटेनानावर्णसङ्करेऽपि नज्ञानविरोधः। **अङ्गीचकारेति** शब्दानामेव

अथ प्रमाणस्यादौ लक्षणं व्याचक्षते।

## मू०-स्वपरव्यवसायि ज्ञानं प्रमाणमिति॥

(रत्ना०)—अत्रचादग्धदहनन्यायेनयावदप्राप्तं तावद्विधेयमिति विप्रतिपन्नानाश्रित्यस्वपरेत्यादिकमव्युत्पन्नान्प्रति प्रमाणं प्रमाणप्रमेयापलापिनस्तूद्दिश्य द्वयमपि विधेयं। शेषं पुनरनुवाद्यं। तत्रप्रमाणमितिप्राग्वत्। स्वमात्माज्ञानस्यस्वरूपं परःस्वस्मादन्योऽर्थ इति यावत् तौविशेषेण यथावस्थितस्वरूपेणाऽवस्यति निश्चिनोतीत्येवं शीलं यत्तत् स्वपरव्यवसायि ज्ञायते प्राधान्येन विशेषो गृह्यतेऽनेनेति ज्ञानं एतच्च विशेषणमज्ञानरूपस्य व्यवहारधुराधौरेयतामनादधानस्य सन्मात्रगोचरस्य स्वसमयप्रसिद्धस्य दर्शनस्य सन्निकर्षादेश्चाचेतनस्य नैयायिकादिकल्पितस्य प्रामाण्यपराकरणार्थं। तस्यापिच प्रत्यक्षरूपस्य शाक्यैर्निर्विकल्पकतया प्रामाण्येन जल्पितस्य संशयविपर्ययानध्यवसायानांच प्रमाणत्वव्यवच्छेदार्थंव्यवसायीति। स्पष्टनिष्टङ्क्यमानपारमार्थिकपदार्थसार्थलुण्टाकज्ञानाद्वैतादिवादिमतमत्यसितुं परेति नित्यपरोक्षबुद्धिवादिनां मीमांसकानामेकात्मसमवायिज्ञानान्तरप्रत्यक्षज्ञानवादिनां यौगानामचेतनज्ञानवादिनां कापिलानांच कदाग्रहग्रहं निग्रहीतुं स्वेति। समग्रलक्षणवाक्यंतु परपरिकल्पितस्यार्थोपलब्धिहेतुत्वादेः प्रमाणलक्षणत्वप्रतिक्षेपार्थम्।

(टि०)-तत्रचेत्यादि यावदप्राप्तमिति अगृहीतं विप्रतिपन्नादिभिः स्वपरेति स्वपरव्यवसायिज्ञानं व्यवस्थापनीयं अव्युत्पन्नानिति शिष्यान् द्वयमपीति प्रमाणञ्च मेयञ्च शेषमिति परेणप्रतिपन्नं स्पष्टार्थमनुवदनीयं ज्ञायते-

इति ज्ञानेप्राधान्येन विशेषः गौणत्वेनतुसामान्यंदर्शनेतुप्राधान्येन सामान्यं गौणत्वेनतु विशेषोगृह्यते अज्ञानरूपस्येति ज्ञानाद्व्यतिरिक्तस्य नतुजडरूपस्य व्यवहारेति व्यवहारविमुखस्य विशेषसाध्यत्वाद्व्यवहारस्य सन्मात्रेति सत्तामात्रं स्वसमयेति जिनसमयप्रख्यातस्य दर्शनस्येति सामान्यग्राहित्वाद्दर्शनस्य तस्येति ज्ञानस्य ताद्धि निर्व्यवसायं कल्पितं शाक्यैः स्पष्टेति प्रत्यक्षेण निर्णीयमानं ज्ञानाद्वैतेति ब्रह्मवादिमतं निराकर्तुं नित्यपरोक्षेति परोक्षा पराभासिनी स्वात्मनि जडा एकात्मेति नज्ञानमात्मानमात्मना जानाति किन्तु ज्ञानं ज्ञानान्तरवेद्यमितिभावः ।

(पं०)—स्पष्टनिष्टङ्क्यमानेत्यादि गद्ये ज्ञानाद्वैतवादिमतमिति आदिशब्दात् शून्यवादिमतम् । एकात्मेत्यादि एकात्मसमवेतं यद्ज्ञानान्तरं तस्यप्रत्यक्षं नपुनरात्मनः प्रत्यक्षज्ञानं वदन्तीत्येवं शीलास्तेषां । यौगानामिति नैयायिकानां कापिलानामिति साङ्ख्यानां । परपरिकल्पितस्येति नैयायिकादिपरिकल्पितस्य । अर्थोपलब्धिहेतुत्वादेरिति अर्थोपलब्धिहेतुः प्रमाणम् ॥

(रत्ना०)—तथाह्यर्थोपलब्धेरनन्तरहेतुः परम्पराहेतुर्वा विवक्षांचक्रे परम्पराहेतुश्चेत्तर्हीन्द्रियवदञ्जनादेरपिप्रामाण्यप्रसङ्गः अथानन्तरहेतुरिन्द्रियमेव प्रमाणं । तत्किन्द्रव्येन्द्रियं भावेन्द्रियंवा । द्रव्येन्द्रियमप्युपकरणरूपं निर्वृत्तिरूपंवा । नप्रथमं तस्य निर्वृत्तीन्द्रियोपष्टम्भमात्रे चरितार्थत्वात् । नापिद्वितीयं तस्य भावेन्द्रियेणार्थोपलब्धौ व्यवधानादानन्तर्याऽसिद्धेः । भावेन्द्रियमपि लब्धिलक्षणमुपयोगलक्षणं वा । नपौरस्त्यं तस्यार्थग्रहणशक्तिरूपस्यार्थग्रहणव्यापाररूपेण तेन व्यवधानात् उदीचीनस्यतु प्रमाणत्वे ऽस्मल्लक्षितमेव लक्षणमक्षरान्तरैराख्यातं स्यात् नचनास्त्येवामूदृशमिन्द्रियमितिभौतिकमेवतत्तत्रानन्तरो हेतुरिति वक्तव्यं। व्यापारमन्तरेणात्मनः स्वार्थसम्वित्फलस्यानुपपत्तेः । नह्यव्यापृत आत्मास्पर्शादिप्रकाशकः सुषुप्तावस्थायामपि प्रकाशप्रसङ्गात् नच-तदानीमिन्द्रियंनास्ति यतस्तदभावः स्यात् । अथ नेन्द्रियं सत्तामात्रेण तद्धेतुः किन्तु मनसाऽर्थेनच सन्निकृष्टमिति चेत् । ननु-

सुषुप्तावस्थायामपि तत्तादृशमस्त्येव मनसः शरीरव्यापिनः स्पर्शनादीन्द्रियेण स्पर्शनादेश्च तूलिकादिना सन्निकर्षसद्भावात् । नचाणुपरिमाणत्वात् मनसःशरीरव्यापित्वमसिद्धमितिवाच्यं तत्र तस्य प्रमाणेन प्रतिहतत्वात । तथाहि । मनोऽणुपरिमाणंनभवतीन्द्रियत्वान्नयनवत् नचशरीरव्यापित्वे युगपत् ज्ञानोत्पत्ति प्रसङ्गः तादृक्षक्षयोपशमविशेषेणैव तस्य कृतोत्तरत्वादिति नैतत्प्रमाणलक्षणमक्षूणं। आचक्ष्महिच मतपरीक्षापञ्चाशति । अर्थस्य प्रमितौ प्रसाधनपटु प्रोक्तुः प्रमाणं परे तेषामञ्जनभोजनाद्यपि भवेद्वस्तु प्रमाणं स्फुटं ॥ आसन्नस्यतु मानता यदि तदा संवेदनस्यैव सास्यादित्यन्धभुजङ्गरन्ध्रगमवत्तीर्थ्यैः श्रितन्त्वन्मतमिति ॥

(टि०)-अथानन्तरेत्यादि द्रव्येन्द्रियमिति द्विविधंद्रव्येन्द्रियं निर्वृत्तिरूपं उपकरणरूपंच उपकरणेन्द्रियं विषयग्रहणसामर्थ्यं च्छेद्यच्छेदनेकरवालस्येव धारा यस्मिन्नुपहतनिर्वृत्तिसद्भावेपि विषयंनगृह्णातीति उपकरणस्य निर्वृत्तीन्द्रियाधारकृतार्थत्वात् निर्वृत्तिराकारः साच बाह्याभ्यन्तरभेदाद्विधा तत्रबाह्याअनेकप्रकारा आभ्यन्तरापुनः क्रमेणश्रोत्रादीनां कादम्बपुष्प १ धान्यमसूर २ अतिमुक्तकपुष्पचन्द्रिका ३ क्षुरप्र ४ नानाकारसंस्थाना ५ लब्ध्युपयोगेन भावेन्द्रियं लब्धीन्द्रियं पुनस्तदावरणक्षयोपशमरूपं उपयोगेन्द्रियं यः स्वविषये व्यापारः तस्येति लब्धीन्द्रियस्य तेनेति भावेन्द्रियेण उपयोगरूपेण अर्थग्रहणेन अस्मल्लक्षितमिति स्वपरावभास्येव ज्ञानं अमूदृशमिति भवदुक्तं भौतिकमिति महाभूतोद्भवमेव तदिति इन्द्रियं तत्रेति अर्थोपलब्धौ स्वार्थसम्विदिति स्वपरज्ञानं यतइति इन्द्रियाभावात् तदभावइति प्रकाशाभावः तद्धेतुरिति प्रकाशहेतुः तदिति इन्द्रियं तादृशमिति मनसार्थेनच संसृष्टं तत्रेति मनसि तस्येति अणुपरिमाणत्वस्य युगपदिति समकालं मनोज्ञानेन्द्रियज्ञानयोरुत्पादप्रसक्तिः अर्थस्येत्यादि प्रमिताविति अर्थोपलब्धौ प्रसाधनेति साधनपटिष्टोहेतुः आसन्नस्येति सन्निकर्षस्य।

(पं०)—परम्पराहेतुर्वेति प्रामाण्येन, अञ्जनादेरपीति तस्यापि चक्षुर्नैर्मल्यकरणादिनाऽर्थोपलब्धिहेतुत्वात्। उपकरणमिति इन्द्रियशक्तिरूपम्। निर्वृत्तिरूपमिति

निर्वृत्तिर्द्विविधाबाहिर्निर्वृत्तिः अन्तर्निर्वृत्तिः । बहिर्निर्वृत्तिः श्रोत्रादिषु कर्ण शष्कुल्यादिरूपा अन्तर्निर्वृत्तिस्त्वेवम् । कदम्बपुष्पगोलकाकारं श्रोत्रं मसूराकारंचक्षुः आतमुक्तकपुष्पाकारं घ्राणेन्द्रियम् । क्षुरप्रसंस्थानं रसनम् । नानाकारं स्पर्शनम् । **अर्थग्रहणशक्तिरूपस्येति** क्षयोपशमरूपस्य । **तेनेति** उपयोगेन । **तदिति** इन्द्रियम् । **तत्रेति** अर्थोपलब्धौ । **नह्यव्यापृतआत्मेत्यादि** भवन्मतेऽपिस्पर्शादीनां फलन्तावदात्मनएव । **प्रकाशप्रसङ्गादिति** तदाप्यव्यापृतत्वात् । **तदभावइति** प्रकाशाभावः । **तत्तादृशमस्त्येवेति** मनसाऽर्थेनचसान्निकृष्टम् । **तत्रेति** मनसि । **तस्येति** अणुपरिमाणत्वस्य । **प्रमाणेन प्रतिहतत्वादिति** मूलपाठः क्वचित्प्रत्यक्षज्ञप्तिकरणत्वादिति प्रत्यक्षं पञ्चेन्द्रियग्राह्यं ज्ञानन्तस्य करणं साधकतमम् । क्वचित्कारणत्वादिति पाठः सोऽपिरम्यः, **तस्येति** अणुपरिमाणत्वस्य युगपत्ज्ञानोत्पत्तिप्रसङ्गस्य । **अञ्जनभोजनाद्यपीति** तद्धिअञ्जनभोजनादिकं व्यवहितं कारणम् ।

(रत्ना०)—अनधिगतार्थाधिगन्तृप्रमाणमित्यपिप्रमाणलक्षणंन मीमांसकस्यमीमांसामांसलतांसूचयति । प्रत्यभिज्ञानस्याप्रामाण्यप्रसङ्गात् । अथात्रापूर्वोप्यर्थः प्रथते । इदानीन्तनमस्तित्वं नहि पूर्वधियाधिगतमिति चेत् । इदमन्यत्रापि तुल्यं । उत्तरक्षणसत्त्वस्य प्राक्क्षणवर्त्तिसम्वेदनेनावेदनात् पूर्वोत्तरक्षणयोः सत्त्वस्यैक्यात् कथन्तेन तस्यावेदनमितिचेत् प्रत्यभिज्ञागोचरेऽपि तुल्यमेतत् । रजतंगृह्यमाणंहि चिरस्थायीति गृह्यते इति वचनात्प्रागेवतद्वेदनेच तदिदानीमस्ति नवा कीदृग्वाऽस्तीति तदनन्तरं नकोपि सन्दिहीत । ततोऽपार्थकमेवानधिगतेतिविशेषणं व्यवच्छेद्याभावात् । नचाव्यापकत्वदोषः प्रकृतलक्षणे प्रत्यक्षपरोक्षलक्षणव्यक्तिव्यापकत्वात् । नाप्यऽतिव्यापकत्वकलङ्कः । संशयाद्यप्रमाणविशेषष्ववर्त्तनात् । नाप्यसम्भवसम्भवः प्रमाणंस्वपरव्यवसायिज्ञानं प्रमाणत्वान्यथानुपपत्तेरित्यतस्तत्र स्वपरव्यवसायिज्ञानत्वसिद्धेः ।

(टि०)-प्रत्यभिज्ञेति सएवायमिति अत्रेति प्रत्यभिज्ञाने इदमन्यत्रापीत्यादि अन्यत्रापीति अधिगतार्थाधिगन्तृषु धारावाहिज्ञानेषु तेनेति पूर्वक्षणेन तस्येति उत्तरक्षणस्य तद्वेदनेति पूर्वोत्तरक्षणयोर्ज्ञाने व्यवच्छेद्येति विशेषणंहि व्यवच्छेदकमस्य व्यवच्छेद्यं नास्ति नचाव्यापकेत्यादि व्यक्तीति विशेषः अतस्तत्रेति प्रमाणे ।

(पं०)—**प्रमाणत्वान्यथानुपपत्तेरिति** भवतिहि धर्मिविशेषेसाध्ये धर्मिसामान्यं हेतुः। **तत्रेति** प्रमाणत्वान्यथानुपपत्त्याख्यंहेतौ।

(रत्ना०)—अत्रचायंकण्टकोद्धारप्रकारस्तथाहि। नतावदत्रपक्षप्रतिक्षेपदक्षदोषसंश्लेषः। अयंहिभवन् किं प्रतीतसाध्यधर्म्मविशेषणत्वमनभीप्सितसाध्यधर्म्मविशेषणता निराकृतसाध्यधर्म्मविशेषणत्वं वा भवेदिति भेदत्रयीत्रिवलीव तरलाक्षीणामुन्मीलति। तत्र न तावत् प्रतीतसाध्यधर्म्मविशेषणत्वमत्राख्यायमानं संख्यावतां ख्यातये यतः प्रसिद्धमेव साध्यंसाधयतामेतदुन्मज्जति। आपोद्रवाइत्यादिवत्। नचैतत्प्रमाणलक्षणमद्यापि परेषां प्रसिद्धिकोटिमाटीकिष्ट नाप्यत्रानभीप्सितसाध्यधर्मविशेषणताभाषणीया साहिस्वानभिप्रेतं साध्यं साधयतामधीमतां धावतिशौद्धोदनस्य नित्यत्वसाधनवत्। नचार्हतानामेतत् प्रमाणलक्षणमनाकाङ्क्षितं। नापिनिराकृतसाध्यधर्म्मविशेषणत्वमत्रोपपत्तिपद्धतिप्रातिबद्धतां दधाति। तद्धि प्रत्यक्षेण अनुमानेनागमेनवा साध्यस्यनिराकरणाद् भवेत्। नचैतदनुष्णस्तेजोऽवयवी नास्ति सर्वज्ञो जैनेनरजनिभोजनं भजनीयमित्यादिवत् प्रत्यक्षानुमानागमादिभिर्बाधासम्बन्धवैधुर्यं दधानमीक्ष्यते। तस्मान्नात्र दोषः पक्षस्य सूक्ष्मोप्युत्प्रेक्षितुं पार्यते। नापिहेतोः स खल्वसिद्धताविरुद्धताव्यभिचारोवा भवेत् यदितावदसिद्धतातदापि किमन्यतरासिद्धिरुभयासिद्धिर्वाभवेत् अन्यतरासिद्धिश्चेत् तदापि वादिनः प्रतिवादिनोवाऽन्यतरस्येयमसिद्धिः स्यात्। यदिवादिनस्तदा किंस्वरूपद्वारेणाश्रयद्वारेणभिन्नाधिकरणताद्वारेण पक्षैकदेशद्वारेण प्रतिज्ञार्थैकदेशद्वारेण वासौ स्यात्। स्वरूपद्वारेणचेत् तत्किं हेतुस्वरूपे विप्रतिपत्तेरप्रतिपत्तेः सन्देहाद्वा। नत्राद्यः प्रकारः सारः प्रमाणत्वाख्यहेतुस्वरूपे समस्तप्रामाणिकपरिषदामविवादात्। नापि द्वितीयः प्रमाणस्वरूपमप्रतिपद्यमानस्य वादिनोऽप्रामाणिकत्व प्रसङ्गात्। नापि तृतीयः सर्वथैवानिर्णीतप्रमाणस्वरूपस्यप्रतिपत्तुस्तत्र सन्देहानुत्पादात्। नखलुसकलकालमनाकलितस्थाणुत्वस्य स्थाणुत्वपुरुषत्वोल्लेखी सन्देहः कस्यापि सम्पद्यते तत्स्वरूपप्रतिपत्तौ वा क्वचित्कथं

सर्वथा प्रमाणस्वरूपे संशयः स्यात् । आश्रयासिद्धिर्व्यधिकरणासिद्धीतु वादिनो जैनस्य दोषावेव नसम्मतौ अस्ति सर्वज्ञः सुनिश्चितासम्भवद्बाधकप्रमाणत्वादुदेष्यतिशकटंकृत्तिकोदयादित्यादेर्गमकत्वेन स्वीकृतत्वात् । सम्मतत्वेवा नतयोरऽत्राऽवकाशशङ्काशङ्कुसङ्कथा । प्रमाणस्य धर्म्मिणः सकलवादिनामविवादास्पदत्वात् प्रमाणत्वहेतोस्तत्रवृत्तिनिर्णयाच्च । पक्षैकदेशासिद्धतापि नात्रसाधीयस्तां दधाति । साहि संम्पूर्णपक्षाव्यापकत्वे सति सम्भविनी । सचेतनास्तरवः स्वापादित्यादिवत् नचैतदत्रास्तिनाप्यनित्यःशब्दो नित्यत्वादित्यादिवत् प्रतिज्ञार्थैकदेशाऽसिद्धताऽभिधानीया । तस्यास्तत्त्वतः स्वरूपासिद्धिरूपत्वादन्यथाधर्म्मिणापि हेतुत्वे तत्प्रसङ्गात् । स्वरूपासिद्धिश्चात्र न यथास्थेमानमास्तिघ्नुते तथानन्तरमेवन्यरूपीतिनवादिनःसाधनमसिद्धमेतत् नापि प्रतिवादिनस्तत्राप्येवं प्रकारकल्पनाप्रबन्धस्य प्रायः समानत्वात् । अत एव वादिप्रतिवाद्युभयस्यापि नासिद्धमिदम् ।

(टि०)-अयंहीति दोषसंश्लेषः अत्रेति विद्वज्जनसदसि संख्यावतामिति विदुषां तार्किकाणां प्रसिद्धये तर्तिकेहेतित्यादि विप्रतिपत्तेरिति विपर्ययात् अप्रतिपत्तेरिति अनध्यवसायात् तत्रेति प्रमाणस्वरूपे तत्स्वरूपेति प्रमाणस्वरूपप्रतिपत्तौ वा क्वचित्सन्देहेपि अस्तिसर्वज्ञइति विकल्पसिद्धस्यापि धर्म्मिणः सिद्धत्वाज्जैनस्य प्रमाणत्वेति प्रमाणत्वादिति लक्षणस्यहेतोः तत्रेति प्रमाणवर्त्तननिश्चयात् पक्षैकेत्यादि सेति पक्षैकदेशाऽसिद्धता तस्याइति प्रतिज्ञार्थैकदेशाऽसिद्धतायाः धर्म्मिणइति नित्यः शब्दोनित्यत्वादित्यत्र नित्यत्वस्य साधनत्वे प्रमाणं स्वपरव्यवसायि ज्ञानं प्रमाणत्वादितिवत् तत्प्रसङ्गादिति प्रतिज्ञार्थैकदेशासिद्धताप्रसक्तेः आस्तिघ्नुतेइति ष्टिव्आस्कन्दनआङ्पूर्वः स्वादिः उपसर्गेणाहिधात्वर्थोबलादन्यत्रनीयते इतिवचनात् स्थिरत्वमाश्रयाति स्वपरत्वमाश्रयति ।

(पं०)—क्वचित्कथंसर्वथा प्रमाणस्वरूपे संशयः स्यादिति अपित्वेकदेशेनैव स्यात् । तत्प्रसङ्गादिति प्रतिज्ञार्थैकदेशासिद्धताप्रसङ्गात् ।

(रत्ना०)-एवंच कथमिदं साधनमसिद्धिसम्बन्धं दधीत। नापि विरुद्धताबन्धकीसम्पर्ककलङ्कितमेतत् । विपक्षाद्व्यावृत्तत्वात् । नापि व्यभिचारपिशाचसञ्चारदुस्सञ्चरं। यतोनिर्णीतविपक्षवृत्तित्वेन सन्दिग्धविपक्षवृत्तित्वेन वाऽत्र व्यभिचारः प्रोच्यते। नतावदाद्येन। अनित्यः शब्दः प्रमेयत्वादित्यादिवद्विपक्षे वृत्तिनिर्णयाभावात् । स्वपरव्यवसायिज्ञानस्य हि विपक्षः संशयादिर्घटादिश्च। नच तत्र कदाचन प्रमाणतावरिवर्त्ति। नापि द्वितीयेन विवादापन्नः पुमान् सर्वज्ञो न भवति वक्तृत्वादित्यादिवद्विपक्षे वृत्तिसन्देहस्यासंभवात्। संशयघटादिभ्यः प्रमाणत्वव्यावृत्तेर्निर्णीतत्वात् । तन्नानैकान्तिकत्वलक्षणमपिदूषणमत्रोपढौकत इति न हेतोरपि कलङ्ककलिकापि प्रोन्मीलति। निदर्शनं पुनर्नोपदर्शितमेवात्रेति न तद्दोषोद्धारसंरम्भः। भवतु वा तदपि व्यतिरेकरूपं संशयघटादि न चात्र कश्चिद्दूषणकणः। सखल्वसिद्धसाध्यव्यतिरेकोसिद्धसाधनव्यतिरेकोसिद्धोभयव्यतिरेकः सन्दिग्धसाध्यव्यतिरेकः सन्दिग्धसाधनव्यतिरेकः सन्दिग्धोभयव्यतिरेकोऽव्यतिरेकोऽप्रदर्शितव्यतिरेकोविपरीतव्यतिरेको वा स्यात् तत्र न तावदाद्याः षट्घटादौसाध्यसाधनव्यतिरेकस्य स्पष्टनिष्टङ्कनात् । नापि सप्तमः व्याप्त्याऽत्र व्यतिरेकनिर्णयात् । नाप्यष्टमनवमौ यत्र नस्वपरव्यवसायिज्ञानत्वं नतत्र प्रमाणत्वमिति व्यतिरेकोपदर्शनादित्यतो निष्कलङ्कादनुमानात् तल्लक्षणसिद्धेरनवद्यमिदं लक्षणम् ।

(टि०)—स्वपरव्यवसायीत्यादि संशयादिरिति स्वपरव्यवसायिनो विपक्षः संशयादिः ज्ञानस्यतु विपक्षो घटादिः नचतत्रेति संशयादौ घटादौवा सखल्विति आसिद्धः साध्याभावो यस्य व्यतिरेकोभाव उच्यते विपरीतव्यतिरेको यथा यत्रनप्रमाणत्वं नतत्र स्वपरव्यवसायिज्ञानत्वमिति साधनोपसंहरणपूर्वसाध्यस्योपसंहारः अनुमानादिति प्रमाणत्वलक्षणात् तल्लक्षणेति प्रमाणलक्षणसिद्धः लक्षणमिति स्वपरव्यवसायित्वरूपम् ।

(पं०)—विपक्षेवृत्तिसन्देहस्यासम्भवादिति विपक्षे उपलक्षणे ।

अथात्रैवज्ञानमिति विशेषणं समर्थयन्ते ।

## मू०-अभिमतानभिमतवस्तुस्वीकारतिरस्कारक्षमंहिप्रमाणमतोज्ञानमेवेदमिति ।

(रत्ना०)-अभिमतमुपादेयमनभिमतं हेयं तद्द्वयमपि द्वेधा मुख्यं गौणंच । तत्र मुख्यं सुखं दुःखंच गौणं पुनस्तयोः कारणं कुसुमकुङ्कुमकामिनीकटाक्षादिकं खलकलहकालकूटकण्टकादिकंच ॥ एवंविधयोरभिमतानभिमतवस्तुनोर्यौ स्वीकारतिरस्कारौ प्राप्तिपरिहारौ तयोः क्षमंसमर्थं प्रापकं परिहारकंचेत्यर्थः अनयोरुपलक्षणत्वादेतदुभयाभावस्वभाव उपेक्षणीयोऽप्यत्रार्थो लक्षयितव्यः । रागगोचरः खल्वभिमतो द्वेषविषयोऽनभिमतोरागद्वेषद्वितयानालम्बनन्तु तृणादिरूपेक्षणीयस्तस्यचोपेक्षकं प्रमाणं तदुपेक्षायां समर्थमित्यर्थः हिर्यस्मादर्थे यस्मादभिमतानभिमतवस्तुस्वीकारतिरस्कारक्षमं प्रमाणमतइदंज्ञानमेव भवितुमर्हति । नाऽज्ञानरूपं सन्निकर्षादिकं प्रयोगश्च प्रमाणं ज्ञानमेव अभिमतानभिमतवस्तुस्वीकारतिरस्कारक्षमत्वात् यत्तु नैवं नतदेवं यथास्तम्भस्तथाचेदं तस्मात्तथा ।

(टि०)-अथेत्यादि अत्रैवेति सूत्रे ।

उपपत्त्यन्तरं प्रकटयन्ति ।

## मू०-नवैसन्निकर्षादेरज्ञानस्य प्रामाण्यमुपपन्नं।तस्यार्थान्तरस्येव स्वार्थव्यवसितौ साधकतमत्वानुपपत्तेरिति ।

(रत्ना०)-अयमर्थः । यथासम्प्रतिपन्नस्य पटादेरर्थान्तरस्याज्ञानरूपस्य स्वार्थव्यवसितौ साधकतमत्वाभावात् प्रामाण्यन्नोपपत्तिश्रियमाशिश्रियत्तथासन्निकर्षादेरपि प्रयोगः सन्निकर्षादिर्नप्रमाणव्यवहार-

भाक् स्वार्थव्यवसितावसाधकतमत्वाद्यदेवं तदेवं यथापटस्तथाचायं तस्मात्तथा ।

(टि०)— नवैसन्निकर्षादिरित्यादि तस्येति सन्निकर्षादेः स्वार्थेति स्वपरव्यवसाये ।

(पं०)—सम्प्रतिपन्नस्येति उभयवादिसम्मतस्य ।

अथास्यसाधनस्यासिद्धिसम्बन्धवैधुर्यं व्यञ्जयन्तः सूत्रद्वयं ब्रुवते ।

**मू०-नखल्वस्य स्वनिर्णीतौ करणत्वं स्तम्भादेरिवाचेतनत्वात् । नाप्यर्थनिश्चितौ स्वनिश्चितावकरणस्यकुम्भादेरिवतत्राप्यकरणत्वादिति ।**

(रत्ना०)—अस्येति सन्निकर्षादेः करणत्वं साधकतमत्वं नाप्यर्थनिश्चिताविति अस्य करणत्वमितियोगः । तत्रापीत्यर्थनिश्चितावपीत्यर्थः । शेषमशेषमुत्तानार्थम् । प्रयोगौतु सन्निकर्षादिः स्वनिर्णीतौकरणं नभवत्यचेतनत्वाद्य इत्थं सइत्थं । यथास्तम्भस्तथाचायं तस्मात् तथा सन्निकर्षादिरर्थनिश्चितौ करणं नभवति स्वनिश्चितावकरणत्वाद्यएवं स एवं यथास्तम्भो यथोक्तसाधनसम्पन्नश्चायं । तस्माद्यथोक्तसाध्यः। अत्र केचिद्यौगाः सङ्गिरन्ते । सन्निकर्षादिर्नप्रमाणव्यवहारभागित्यादि यदवादि तत्रादिशब्दसूचितकारकसाकल्यादेः काममप्रामाण्यमस्तु सन्निकर्षस्यतु प्रामाण्यापकर्षो नोमर्षप्रकर्षसिद्धये तस्यार्थोपलब्धौ साधकतमत्वावधारणेन स्वार्थव्यवसितावसाधकतमत्वादित्यत्र हेत्वेकदेशस्यासिद्धेः । यत्तु तत्सिद्धौ साधनमधुनैवाभ्यधुस्तदसाधीयः प्रदीपेन व्यभिचारात् । तस्य स्वनिश्चितावकरणस्याप्यर्थनिश्चितौकरणत्वादिति । तदेतत्रपापात्रमर्थोपलब्धौसन्निकर्षस्यसाधकतमत्वासिद्धेर्यत्रहिप्रमात्राव्यापारितेसत्यवश्यंकार्यस्योत्पत्तिरन्यथा पुनरनुत्पत्तिरेव । तत्तत्र साधकतमं यथा

छिदायां दात्रं नच नभसि नयनसन्निकर्षसम्भवेपि प्रमोत्पत्तिः । रूपस्य सहकारिणोऽभावात् तत्रतदनुत्पत्तिरितिचेत् । कथमसौ रूपेपि स्यात् । नहिरूपे रूपमस्ति निर्गुणत्वाद्गुणानां नापि तदाधारभूते द्रव्ये रूपान्तरमस्ति यावद्द्रव्यभाविसजातीयगुणद्वयस्य युगपदेकत्र त्वया नभ्युपगमात् । अवयवगतं रूपमवयविरूपोपलब्धौ सहकारि समस्त्येवेति चेत् । कथं त्र्यणुकावयविरूपोपलम्भो भवेत् । नहिद्व्यणुकलक्षणावयवत्रयवर्त्तिरूपमुपलभ्यते । यतः सहकारि स्यात् । अनुपलभ्यमानमपितत्तत्रसहकारीतिचेत् । तर्हिकथंनतप्तपाथसि पावकोपलम्भसम्भवस्तदवयवेष्वनुपलभ्यमानस्य रूपस्य भावात् यदिचरूपंसहकारि कल्प्यते तदा समाकलितसकलनेत्रगोलकस्य दूरासन्नतिमिररोगावयविनः कथंनोपलब्धिः ।

(टि०)—अथास्येत्यादि साधनस्येति स्वार्थव्यवसितावसाधकतमत्वादित्येवं रूपस्य वैधुर्यमिति अभावं साधकतमत्वमिति प्रमाणत्वं यद्इत्थंमिति यांचेतनः सस्वनिश्चितौ करणं नभवति सन्निकर्षादिरित्यादि तत्रेति सन्निकर्षादौ कारकेति कारकाणि सहकारिकारणानि उपादानादीनि च तेषां सकलतायाः तस्येति सन्निकर्षस्य अत्रेति पक्षे हेत्वेकदेशेति स्वार्थव्यवसितावसाधकतमत्वाद्भवतुस्वव्यवसितावसाधकतमत्वं सन्निकर्षस्यार्थव्यवसितौतुसाधकतमइति हेत्वेकदेशोऽसिद्धः तत्सिद्धाविति अर्थव्यवसितिविषयेऽसाधकतमत्वसिद्धौ तस्येति सन्निकर्षस्य प्रदीपस्य च यत्रहीति दात्रादौ अन्यथेति अव्यापारिते तदिति दात्रादि तत्रेति कार्योत्पत्तौ रूपस्येति नीलपीतादेः तत्रेति नभसि तदनुत्पत्तीति प्रमानुपपत्तिः असाविति प्रमा यावद्द्रव्येति संयोगसंख्यादयो गुणा अयावद्द्रव्यभाविनः अपरेतु विपरीता यावद्द्रव्यभाविनइत्यर्थः कथंत्र्यणुकेति अणुद्वयसंयोगेद्व्यणुकः द्व्यणुकत्रयेणत्र्यणुकःस्यादित्यौलूक्यसिद्धान्तः अनुपलभ्येत्यादि तदिति द्व्यणुकलक्षणमवयवत्रयं तत्रेति त्र्यणुकावयविरूपोपलम्भे पावकेति चाक्षुषप्रत्यक्षेण ग्रहणाभावः तदवयवेष्विति पावकावयवेषु रूपस्येति अग्नेः समाकलितेति आवेष्टितसमग्रनयननीलमणेः ।

(पं०) यथोक्तसाधनसम्पन्नश्चायमिति अयंप्रयोगः । हेत्वेकदेशस्यासिद्धेरिति तस्य स्वव्यवसितौ साधकतमत्वं नास्ति अर्थव्यवसितौ च सुतरामस्ति । तत्सिद्धाविति अर्थव्यवसितिविषयेऽसाधकतमत्वासिद्धौ । अभ्यधुरिति भवन्तः । तत्रेति नभसि । तदनुत्पत्तिरिति प्रमानुत्पत्तिः । रूपान्तरमस्तीति रूपान्तरम् कृष्णादि । कथंत्र्यणुकावयविरूपोपलम्भइति त्रिभिर्द्व्यणुकैस्त्र्यणुकः अवयवगतरूपानुपलम्भे सति कथंत्र्यणुकावयविरूपोपलम्भो भवेत् इतिवाक्यभावार्थः । रूपस्य भावादिति अग्नेः सत्कस्य ।

(रत्ना०)–अथात्यन्तासत्त्यभावोपिसहकारी नचासौतिमिरे स्तीतिचेत् । नन्वियमासत्तिरात्मापेक्षया शरीरापेक्षया लोचनापेक्षया तदधिष्ठानापेक्षया वा विवक्षांचक्रे प्रेक्षादक्षेण । आद्येकल्पे कथं कस्यापि पदार्थस्योपलब्धिर्व्यापकस्यात्मनः सर्वभावैरासत्तिसम्भवात् द्वितीयेकथं करतलतुलितमातुलिङ्गादेरुपलम्भः । तृतीये कथंक्वापि चाक्षुषप्रत्यक्षमुन्मज्जेत् चक्षुषः प्राप्यकारित्वकक्षीकारेण सर्वत्रस्वगोचरेणासत्तिसद्भावात् । तुरीयेकथमधिष्ठानसंयुक्ताञ्जनशलाकायाः समुपलब्धिः । अथयेनांशेनतस्यास्तत्रसंसर्गः सनोपलभ्यतएवनैवमवयविनोनिरंशत्वेन स्वीकारात् । अपिचकथमुदीचींप्रतिव्यापारितनेत्रस्य प्रमातुर्नकाञ्चन काञ्चनाचलोपलब्धिमनुभवामः । नचदवीयस्त्वान्नतत्रनेत्ररश्मयः प्रसर्त्तुं शक्तास्तेषां शशाङ्केपिप्रसरणाभावापत्तेः । अथ तदालोकमिलितास्तेवर्द्धन्ते तर्हिखरतरकरनिकरनिरन्तरापूरितविष्टपोदरे मरीचिमालिनि सति सुतरां सुराद्रिमभिसर्प्पतां तेषां वृद्धिर्भवेत् । नच दिनकरमरीचीनां नितरां कठोरत्वेन तैस्तेषां प्रतिघातस्तदालोककलापाकलितकलशकुलिशादिपदार्थानामप्यनुपलम्भापत्तेः । ततोनसन्निकर्षसद्भावेप्यवश्यं सम्वेदनोदयोऽस्ति । नापितदभावेऽभावएव । प्रातिभप्रत्यक्षाणामार्षसंवेदनविशेषाणांच तत्कालाविद्यमानवस्तुविषयतया सन्निकर्षाभावेपि समुद्भवात् । तन्नसन्निकर्षस्यसाधकतमत्वं साधुत्वसौधाध्यासधैर्यमार्जिजत् । यच्चप्रदीपेन व्यभिचारमुदचीचरः सोपिनचतुरचेतश्चमत्कारचञ्चुः प्रदीपस्यमुख्यवृत्त्याकरणत्वानुपपत्तेर्नेत्रसहकारितयाकरणत्वोपचारात् ।

यथाचोपचारादर्थव्यवसितौकरणमयं तथास्वव्यवसितावपि नहिप्रदीपो-पलम्भेप्रदीपान्तरान्वेषणमस्ति । किंत्वात्मनैवात्मानमयम्प्रकाशयतीति-क्व्यभिचारः। तन्नसन्निकर्षस्यार्थव्यवसितावसाधकतमत्वमसिद्धम्। अन-यैवदिशा कारकसाकल्यादेरप्यर्थव्यवसितावसाधकतमत्वं समर्थनीयमिति नहेत्वेकदेशासिद्धिः।

(टि०)-असाविति अत्यन्तासत्त्यभावः कथंकस्यापीति नकस्यापि नकस्यापि प्राप्नोतीत्यर्थः कथंक्वापीति काक्वानक्वापीत्यर्थः तस्याइति अञ्जन शलाकायाः तत्रेति अधिष्ठाने सइति अंशः अपिचकथमित्यादि दवीयस्त्वादिति दूरत्वात् तत्रेति काञ्चनाचले तेषामिति नेत्ररश्मीनां तदालोकेति तस्यशशांकस्या लोकेन सङ्गताः तइति रश्मयः तेषामिति नयनाकिरणानां तैरिति दिनकरमरीचिभिः तेषामिति नेत्रांशूनां तदालोकेति दिनकर निकरालोककलापेन तदभावेइति सन्निकर्षाभावे प्रातिभेति केवलज्ञानादि-संवेदनानां अयमिति प्रदीपः।

(पं०—कथंकस्यापिपदार्थस्योपलब्धिरिति नकस्यापि प्राप्नोति। कथं क्वापि चाक्षुषप्रत्यक्षमुन्मज्जेदिति नक्वापीत्यर्थः। चक्षुषः प्राप्यकारित्व-कक्षीकारेणेति भवद्भिः। तस्या इति अञ्जनशलाकायाः स्वीकारादित्यतोऽग्रे। अपिचेति यद्यत्यन्तासत्त्यभावः सहकारीतिगम्यम्। तदालोकमिलिता इति शशाङ्कालोकमिलिताः। तदभावेइति सन्निकर्षाभावे। करणमयमिति अयंदीपः।

अथव्यवसायीतिविशेषणसमर्थनार्थमाहुः।

## मू०-तद्व्यवसायस्वभावंसमारोपपरिपन्थि-त्वात्प्रमाणत्वाद्वेति।

(रत्ना०)—तत्प्रमाणत्वेनसम्मतंज्ञानं व्यवसायस्वभावं निश्चयात्मक-मित्यर्थः समारोपः संशयविपर्ययानध्यवसायस्वरूपोऽनन्तरमेव निरूप-यिष्यमाणस्तत्परिपन्थित्वं तद्विरुद्धत्वं यथावस्थितवस्तुग्राहकत्वमिति यावत् प्रमाणत्वाद्वातत्तथाविधं वाशब्दोविकल्पार्थः तेनप्रत्येकमेवामूहेतू-

प्रमाणत्वाभिमतज्ञानस्यव्यवसायस्वभावत्वसिद्धौसमर्थावित्यर्थः । प्रयोगौतु प्रमाणत्वाभिमतं ज्ञानं व्यवसायस्वभावं समारोपपरिपन्थित्वात्प्रमाणत्वाद्वा यत्पुनर्नैवं नतदेवं यथाघटः प्रोक्तसाधनद्वयाऽधिकरणं चेदं । तस्माद्व्यवसायस्वभावमिति । अत्रैकदेशेनपक्षस्य प्रत्यक्षप्रतिक्षेपमाचक्षतेभिक्षवस्तथाहि । संहृतसकलविकल्पावस्थायां नीलादिदर्शनस्य व्यवसायवन्ध्यस्यैवानुभवात्पक्षीकृतप्रमाणैकदेशस्य प्रत्यक्षस्य व्यवसायस्वभावत्वसाधनमसाधीयस्तदसाधिष्टं यतः केनप्रत्यक्षेणतादृक्षस्य तस्यानुभवोभिधीयते ऐन्द्रियेण मानसेन योगिसत्केन स्वसंवेदनेन वा नाद्येन तत्रेन्द्रियकुटुम्बस्य व्यापारपराङ्मुखत्वात् । नद्वितीयेन तस्येन्द्रियज्ञानपरिच्छिन्नपदार्थानन्तरक्षणसाक्षात्कारदक्षत्वात् । नतृतीयेन अस्मादृशांयोगिप्रत्यक्षस्पर्शशून्यत्वात् । योगीतुतथाजानातीतिकोशपानप्रत्यायनीयं । नापि तुर्येण यतस्तत्स्वरूपोपदर्शनादेव प्रमाणं स्यादनुरूपविकल्पोत्पादकत्वाद्वा । आद्यपक्षे प्रत्यक्षं क्षणक्षयस्वर्गप्रापणशक्त्यादावपि प्रमाणतामास्कन्देत् । द्वितीयपक्षोप्यक्षमः संहृतसकलविकल्पावस्थाभाविनीलादिदर्शनानन्तरं नीलादिरयमित्यर्थोल्लेखशेखरस्यैव विकल्पस्य प्रायेणानुभवात् । यत्रापिनीलादिज्ञानं ममोत्पन्नमिति ज्ञानोल्लेखी विकल्पस्तत्रापिज्ञानमात्रोल्लिखित्वादस्यतत्रैवदर्शनस्यप्रामाण्यंस्यान्नतुतन्निर्विकल्पकत्वे । अपिच विकल्पस्यापिकथंसिद्धिः स्वसंवेदनप्रत्यक्षादितिचेत् । तस्यापिस्वरूपोपदर्शनमात्रात्प्रामाण्येतदेवदूषणं विकल्पान्तरोपजननात्पुनरनवस्था । तथाच कथंस्वसंवेदनस्य प्रामाण्यसिद्धिर्यतस्तेन बाधापक्षांशेस्यात् ।

(टि०)-अत्रैकदेशेनेत्यादि नीलादीति निर्विकल्पकप्रत्यक्षस्य पक्षीकृतेति पक्षोज्ञानं प्रत्यक्षपरोक्षरूपं तस्यैकदेशस्य प्रत्यक्षस्य तादृक्षस्येति व्यवसायवन्ध्यस्य तस्येति नीलादि दर्शनस्य तत्रेति निर्विकल्पकप्रत्यक्षे इन्द्रियेति नहीन्द्रियाणांघटादिवत्प्रत्यक्षं प्रत्यक्षं भवति तस्येति मानसस्य ऐन्द्रियेणपरिच्छिन्नेरूपादौ तदनन्तरंयद्रूपादि ततस्तत्रमनोज्ञानंप्रवर्त्तते नापितुर्येणेत्यादि तादिति स्वसंवेदनं अनुरूपेति निर्विकल्पकमिदमिति

आद्येपक्षइति प्रत्यक्षंस्वरूपं दर्शयत् क्षणक्षयं ज्ञापयेत् तदाकारोपदर्शनमात्रेण प्रामाण्ये क्षणिकत्वेपि तस्य प्रामाण्यप्रसक्तिः यदिप्रत्यक्षं स्वरूपमुपदर्शयत् प्रमाणं तदामयाक्षणक्षयिणः परमाणवोगृहीता इत्यस्याप्यात्मस्वरूपोपदर्शने प्रमाणतांगच्छेत् तथाच क्षणिकत्वानुमाने वैकल्यञ्च स्यात् तथाहि यथा दानपरिणामचित्तानुभवः स्वसंवेदनाध्यक्षलक्षणस्तद्‌गतं सद्द्रव्यचेतनादिकं विषयीकरोति तथास्वर्गप्रापणसामर्थ्यमपि तत्स्वरूपाव्यतिरिक्तत्वाद् विषयी कुर्यादिति भावार्थः क्षणक्षयज्ञानात् स्वर्गप्राप्तिः स्याज्जन्तोः क्षणिकाः सर्वसंस्काराः इत्येवं वासना यकासमार्गइहविज्ञेयइति वचनात् * बौद्धानांमतेऽध्यक्षेण क्षणोगृह्यते नतुतत्क्षयो वस्तुनोनिरंशत्वेनाभिन्नोपि नचयन्निरंशवस्तुप्रभवंज्ञानं तन्निरंशग्राहि प्रत्यक्षप्रभवाविकल्पस्य तद्भावानुपपत्तौ वा हिंसाविरतिदानचित्तस्वसंवेदनाध्यक्षप्रभवनिर्णयेन तद्‌ग्रहणोपपत्तेर्निश्चयविषयीकृतस्य चानिश्चितरूपान्तराभावात् स्वर्गप्रापणसामार्थ्यादेरपि तद्गतस्य निश्चयात्तत्र विप्रतिपत्तिर्नस्वर्गोनापितत्प्राप्तिहेतुःकश्चिद्भावइत्यादिरूपाचार्वाकादेर्नस्यात् किंतुस्वर्गप्रापणसामर्थ्यस्य दानचित्तादभिदावस्तुस्वरूपग्राहिणाचस्वसंवेदनाध्यक्षेणानुभवे सद्द्रव्यचेतनत्वादाविव विवादाभावोभवेदिति क्षणक्षयस्वर्गप्रापणेत्यादि बौद्धमतेहिनीलाद्यप्रत्यक्षं नीलाद्यर्थमिवतद्गतं क्षणक्षयमपि विषयीकरोति परंनीलाद्यर्थविषयेतत्प्रत्यक्षं अनुरूपविकल्पोत्पादकत्वात् बौद्धैः प्रमाणमिष्यतेतु नतत्प्रमाणमनुरूपविकल्पोत्पादकत्वाभावात् यत्रैवजनयेदेनां तत्रैवास्यप्रमाणतेतिवचनात् यत्रैवविषयेइमांकल्पनाञ्जनयेत्तत्रैवविषयेस्यप्रत्यक्षस्य प्रामाण्यमित्यर्थः तथास्वसंवेदनप्रत्यक्षं बौद्धमतेस्वगतंक्षणक्षयं सत्वचेतनत्वादिच विषयीकुर्वदनुरूपविकल्पोत्पादकत्वात्सत्वादिविषयेप्रमाणं प्रतिपाद्यते क्षणक्षयविषयेत्वप्रमाणं तदनुसारिविकल्पाजनकत्वात् तथा हिंसाविरतिचित्तं दानचित्तंचस्वर्गहेतुत्वादिनास्वर्गप्रापणसामर्थ्याद्युपेतं बौद्धामन्यन्ते तच्चहिंसा.विरतिदानचित्तस्वसंवेदनप्रत्यक्षं स्वगतसचेतनत्वादिकमिव स्वगतस्वर्गप्रापणसामर्थ्यादिकमपि गृह्णाति गृहीतस्यहि स्वस्वरूपस्य निरंशत्वेनागृहीतरूपान्तराभावात् बौद्धैस्तत्स्वसंवेदनप्रत्यक्षं सचेतनत्वादौ प्रमाणं मन्यते स्वर्गप्रापणसामर्थ्यादिविषयेत्वप्रमाणं तद्विषयेविकल्पाजननात् एवं च सति हि यदि स्वरूपोपदर्शनादेव प्रमाणमिष्यते तदाक्षणक्षयविषयेपि स्वर्गप्रापणसामार्थ्यादिविषयेपि च तत्प्रमाणं भवेत् स्वरूपोपदर्शनमात्रस्य तत्रापिसद्भावात् नचबौद्धैः क्षणक्षयादिविषये तत्प्रमाणमिष्यते ततः स्वरूपोपदर्शनादेवेति पक्षोपिनयुक्तइतिभावः * संहतेति निर्विकल्पक-

ज्ञानावस्थायां भावि यन्नीलादिदर्शनं तत्रापीति निर्विकल्पकसविकल्पक-विचारे ज्ञानमात्रेति निर्विकल्पकसविकल्पकविचाररहितं ज्ञानमात्रं अस्येति ज्ञानोल्लेखिविकल्पस्य तत्रैवेति ज्ञानमात्रे दर्शनस्येति स्वसंवेदनप्रत्यक्षस्य दर्शनस्येति स्वसंवेदनस्य ततः संवेदनप्रामाण्येन नीलादिज्ञानंममोत्पन्नं इति-विकल्पएवसिद्धो ननु निर्विकल्पकत्वं तस्य जात्याद्युल्लेखरहिततया निर्देष्टुम-शक्यत्वात् तन्निर्विकल्पकत्वइति स्वसंवेदनप्रत्यक्षस्यानिर्विकल्पकत्वे तस्यापीति स्वसंवेदनप्रत्यक्षस्य स्वरूपेति क्षणिकत्वोपदर्शनमात्रात् तदेवेति पूर्वप्रक्रान्तं क्षणक्षयस्वर्गप्रापणशक्त्यादावित्यादि विकल्पान्तरेति विक-ल्पान्तरस्यापि कथंसिद्धिः स्वरूपोपदर्शनमात्रात्तदेव दूषणं विकल्पा-न्तरोपजननादनवस्थाऽनया दिशा भावनीयं यतइति प्रामाण्यसिद्धेः तेनेति स्वसंवेदनेन ।

(पं०) तादृक्षस्येति व्यवसायवन्ध्यस्य । तस्येति नीलादिदर्शनस्य । तस्येन्द्रि-यज्ञानेत्यादि । इन्द्रियेण परिछिन्ने रूपादौ तदनन्तरं यद्रूपादि ततस्तत्रमनोज्ञानं प्रवर्त्तते। इतिश्लोकस्तर्कभाषासूत्रव्याख्यात्रैव । स्वाविषयानन्तराविषयसहकारिणा इन्द्रियज्ञानेन समनन्तर-प्रत्ययजनितं मनो विज्ञानम् । प्रत्यक्षमिति स्वसम्वेदनम् । आस्कन्देदिति यथास्वरूपे अस्येति विकल्पस्य, तत्रैवेति विकल्पे एव ।

(रत्ना०)–अथयन्ननिर्विकल्पकं तत्रैवविकल्पेनसहोत्पद्यते। यथावि-कल्पोविकल्पान्तरेण विकल्पेनापि सहोत्पद्यते च प्रत्यक्षं । नचेदं नसि-षेधसाधनं गन्धर्वविकल्पदशायामपि गोः साक्षात्करणादन्यथासमया-न्तरे तत्स्मरणानुत्पत्तिप्रसङ्गादित्यनुमानबाधितः पक्षैकदेशइतिचेत्तदपि-कवलितंकालेन कालान्तरे स्मरणसद्भावाद्व्यवसायात्मकस्यैव प्रत्यक्षस्य प्रसिद्धेर्निर्विकल्पकस्य संस्कारकारणत्वविरोधात्क्षणिकत्वादिवत् । अथा-भ्यासप्रकरणबुद्धिपाटवार्थित्वेभ्यो निर्विकल्पकादपि प्रत्यक्षाद्गवादौ संस्कारः स्मरणं च समगंस्त नतु क्षणक्षयादौ तदभावादितिचेत्तदप्यल्पी-योभूयोदर्शनलक्षणस्याभ्यासस्य क्षणक्षयादावक्षोदीयसः सद्भावात् पुनः पुनर्विकल्पोत्पादरूपस्य चाभ्यासस्य परंप्रत्यसिद्धत्वात्तत्रैव विवादात् । क्षण–

१ "नीलादौ" इत्यपि पाठान्तरम् ।

भिदेलिमभावाभिधानवेलायां क्षणिकप्रकरणस्यापि भावात्। बुद्धिपाटवस्य क्षणिकत्वादौ नीलादौ च समानत्वात्। तत्प्रत्यक्षस्य निरंशत्वेन कक्षीकारादन्यथाविरुद्धधर्माध्यासेन तस्य भेदापत्तेः॥ अर्थित्वस्यापिजिज्ञासितत्वलक्षणस्य क्षणिकवादिनः क्षणिकत्वे सुतरां सद्भावान्नीलादिवत्। अभिलषितत्वरूपस्य तु तस्य व्यवसायजननं प्रत्यनिमित्तत्वादनभिलषितेपि वस्तुनि कस्यापि व्यवसायसम्भवात्। ततो नाऽनंशवस्तुवादिनः क्वचिदेवस्मरणं समगत। तथाच। यद्व्यवसायशून्यं ज्ञानं न तत्स्मृतिहेतुर्यथा क्षणिकत्वादिदर्शनम्। तथाचाश्वविकल्पकाले गोदर्शनामितिप्रसङ्गस्तथाच तत्स्मृतिहेतुर्नस्याद्भवति च पुनर्विकल्पयतस्तदनुस्मरणं। तस्मात्तद्व्यवसायात्मकमिति प्रसङ्गविपर्ययः। एवं च स्मरणात्तस्य व्यसायात्मकस्यैव सिद्धेर्व्यवसायस्य च व्यवसायान्तरेण समानकालत्वाभावाद्विकल्पेनापि सहोत्पद्यमानत्वादितिहेतुरसिद्धिवन्धकीसम्बन्धबाधित इतिसिद्धम्। अथ न व्यवसायस्वभावत्वेन समारोपपरिपन्थित्वप्रमाणत्वहेत्वोर्व्याप्तिरुपपादि तदभावेपि व्यवसायजनकत्वमात्रेण तयोः क्वचिद्भावान्निरोधात्। अनुमानं हि व्यवसायस्वभावं सत्समारोपपरिपन्थि प्रमाणं च प्रत्यक्षन्तु व्यवसायजनकमितिकोविरोधइति चेत्। इहतावत्प्रमाणत्वहेतोर्व्याप्तिरुपदर्श्यते। प्रमाणं खल्वविसंवादकमवादिषुः सौगताः अविसंवादकत्वं चार्थप्रापकत्वेन व्याप्तमर्थाप्रापकस्याविसंवादित्वाभावान्निर्विषयज्ञानवत्तदपिप्रवर्त्तकत्वेन व्यापि। अप्रवर्त्तकस्यार्थाप्रापकत्वात्तद्वदेव तदपि विषयोपदर्शकत्वेन व्यानशे स्वविषयमुपदर्शयतः प्रवर्त्तकत्वव्यवहारविषयत्वासिद्धेर्नहि पुरुषं हस्ते गृहीत्वा ज्ञानं प्रवर्त्तयति। स्वविषयंतूपदर्शयत्प्रवर्त्तकमुच्यतेऽर्थप्रापकश्चेति।

(टि०)-अथयन्नेत्यादि प्रत्यक्षेण पक्षांशस्य बाधेऽसिद्धे परोक्तं तद्बाधकानुमानमाशंक्य परिहरत्याचार्यः। अनुमानं चेदं प्रत्यक्षं निर्विकल्पकं व्यवसायवन्ध्यमित्यर्थः विकल्पैः सहोत्पद्यमानत्वात् ततोयन्निर्विकल्पकमित्यादि व्यतिरेकव्याप्तिः यदिति प्रत्यक्षं निर्विकल्पकाविकल्पेन सहोत्पादात इदमिति विकल्पेनसहोत्पाद्यमानत्वादित्यादि लक्षणं नसिषेधेति आसिद्धमिति न गन्धर्वेति तुरगः साक्षात्करणादिति निर्विकल्पकप्रत्य-

---

१ "उदपादि" इत्यपि पाठान्तरम्।

क्षेण निष्टङ्कनात् अन्यथेति साक्षात्करणव्यतिरेके तत्स्मरणेति गोस्मृत्यनुत्पादप्रसक्तेः क्षणिकत्वेति क्षणिकत्वादाविवसप्तम्यर्थे वतिःयथाक्षणिकत्वादिविषये निर्विकल्पकत्वाद् ज्ञानं न संस्कारं जनयति एवं गोविषयेपि नजनयेदित्यर्थः तदभावादिति अभ्यासप्रकरणाद्यभावात् अक्षोदीयस इति बहुतरस्य परामिति जैनं प्रति तत्रैवेति विकल्पोत्पादकत्वे बुद्धिपाटवस्येति चोप्यर्थे यादृग् बुद्धिपाटवं निर्विकल्पके क्षणिकत्वेपि तादृगेव उभयोरपि निरंशत्वात् तत्प्रत्यक्षस्येति नीलप्रत्यक्षस्य अन्यथेति सांशत्वाङ्गीकारे तस्येति नीलप्रत्यक्षस्य अर्थित्वस्येति अर्थित्वंद्विविधं जिज्ञासिततत्वलक्षणमभिलषितत्वलक्षणं च तस्येति अर्थित्वस्य अनिमित्तेति निमित्तनिश्चयाभावात् यद्व्यवसायेति अश्वविकल्पकाले गोदर्शनं न स्मृतिहेतुर्व्यवसायशून्यत्वात् प्रसङ्ग इति परेष्टेनानिष्टापादनप्रसङ्गः तथाचेति तस्मादेवं सति तदिति गोदर्शनं तदनुस्मरणमिति गोदर्शनस्मरणम् तद्व्यवसायेति गोदर्शनव्यवसायस्वभावं तद्विपर्ययइति पाठे प्रसङ्गविपर्ययः अश्वविकल्पकालोत्पन्नं गोदर्शनं नस्मृतिहेतुरित्यत्र प्रसङ्गानुमानेपक्षः व्यवसायशून्यज्ञानत्वादितिहेतुः यद्व्यवसाय० इत्यन्वयव्याप्तिदृष्टान्तः तस्येति गोदर्शनस्य तदभावेपीति व्यवसायस्वभावत्वाभावेपि तयोरिति समारोपपरिपन्थित्वप्रमाणत्वहेत्वोः सान्दिग्धानैकान्तिकं प्रमाणत्वं अविसम्वादेत्यादि यथाबुद्धिपाटवेन परमाणुद्वयं पश्यति तथाक्षणक्षयं किं नपश्यति बुद्धिपाटवस्य तत्रापिविद्यमानत्वात् यदि च तं न पश्यति प्रत्यक्षं तर्हिप्रत्यक्षस्य निरंशता विरुध्यति एकस्यवस्तुनः परमाणुरूपं दृश्यं क्षणक्षयित्वंचादृश्यं इति विरुद्धौधर्मौ तदपीति अर्थप्रापकत्वं तद्वदेवेति निर्विषयज्ञानवदेव तदपीति प्रवर्त्तकत्वं।

(पं०)—नचेदं नसिषेधसाधनमिति नासिद्धम्। गन्धर्वविकल्पदशायामिति अश्वविकल्पावस्थायाम्। क्षणिकत्वादिवदिति क्षणिकत्वादाविव सप्तम्यर्थे वत्, यथाक्षणिकत्वादिविषये निर्विकल्पकत्वात् ज्ञानं न संस्कारं जनयति एवं गोविषयेऽपि न जनयेदित्यर्थः। तदभावादितिचेदिति अभ्यासप्रकरणबुद्धिपाटवार्थित्वेभ्योऽभावात्। परम्प्रतीति मां प्रति, तत्प्रत्यक्षस्येति निर्विकल्पकस्य, क्वचिदेवस्मरणं समागतेति नीलादावे-

वांशेन तु क्षणिकत्वाद्वौ । **यद्व्यवसायशून्यमित्यादि** अश्वविकल्पकाले गोदर्शनं न स्मृतिहेतुः व्यवसायशून्यत्वात्, **प्रसङ्गविपर्यय इति** यःस्मृतिहेतुस्तद्व्यवसायात्मकं स्मृतिहेतुश्चाश्वविकल्पकाले गोदर्शनमित्यत्र च प्रसङ्गविपर्ययानुमाने व्याप्तिग्रहः प्रागुक्तप्रसङ्गादेव । अथ नखलु प्रत्यक्षस्य **व्यवसायस्वभावतेति** कृत्वासमारोपपरिपन्थित्वं प्रमाणत्वं च किन्तु-व्यवसायजनकमेतादिति तस्य तत्स्वरूपत्वमित्युक्तौ कोनामात्र विरोधइतिचेदिति पराशङ्कायामाह सूरिरिहतावदित्यादि । **तद्वदेवेति** निर्विषयज्ञानवदेव ।

(रत्ना०)–तत्रेदं चर्च्यते किं दर्शनस्य व्यवसायोत्पत्तौ सत्यां विषयोपदर्शकत्वं सञ्जायेत समुत्पन्नमात्रस्यैव वा सम्भवेत् । प्राचिकविकल्पे विकल्पकाले दर्शनस्यैव विनाशात् क्वनामविषयोपदर्शकत्वं व्यवतिष्ठेत द्वितीयकल्पनायां पुनः किमनेन कृतक्षौरनक्षत्रपरीक्षा प्रायेण पश्चात्प्रोल्लसता नीलादिविकल्पेनापेक्षितेन कर्त्तव्यं तमन्तरेणापि विषयोपदर्शकत्वस्य सिद्धत्वात् । तथाच । यत्रैवजनयेदेनान्तत्रैवास्य प्रमाणतेति राद्धान्तविरोधः । व्यवसायं विनैवविषयोपदर्शकत्वसद्भावे प्रामाण्यस्यापि तं विनैवभावात् । तन्मात्रनिमित्तत्वात्तस्यकथञ्चैवं क्षणक्षयस्वर्गप्रापणशक्त्यादावपि दर्शनस्य विषयोपदर्शकत्वं न प्रसज्यते अथाध्यवसानपर्यवसानो व्यापारो दर्शनस्येत्यध्यवसायव्यापारवत एवास्य विषयोपदर्शकत्वमवतिष्ठते नपुनस्तमन्तरेणेति चेत् तदप्यलं[1] निर्विकल्पककार्यत्वेन व्यवसायस्य ततोभिन्नकालत्वात्तेन तस्य व्यापारवत्त्वानुपपत्तेः । अस्तु वैतत्तथापि तद्व्यापारभूतोसौव्यवसायो दर्शनगोचरस्योपदर्शकोऽनुपदर्शको वा स्यात् । यद्युपदर्शकस्तदा सएव तत्र प्रवर्त्तकः प्रापकश्च स्यात् ततोऽपि संवादकत्वात् प्रमाणं न पुनस्तत्कारणीभूयमाभेजानं दर्शनं । अथानुपदर्शकः कथं दर्शनं तज्जननात् स्वविषयोपदर्शकमतिप्रसङ्गात् । संशयविपर्ययकारणस्यापि तस्य स्वविषयोपदर्शकत्वापत्तेः दर्शनविषयसामान्यव्यवसायित्वाद्विकल्पस्य तज्जनकं दर्शनं स्वविषयोपदर्शकं नेतरादिति चेत् तदशस्यं दर्शनविषयसामान्यस्यान्यापोहलक्षणस्यावस्तुत्वात् तद्विषयव्यवसायजनकस्य वस्तूपदर्शकत्वविरोधात ।

१ "तदत्यलं" इत्यपि पाठान्तरम् ।

(टि॰)-तत्रेदमित्यादि दर्शनस्येति निर्विकल्पकप्रत्यक्षस्य व्यवसायेति विकल्पोत्पत्तौ तमन्तरेणेति नीलादिविकल्पं विना यत्रैवेत्यादि अभ्यासपाटवापत्तितारतम्यादिभेदतः इति पूर्वार्द्धं एनामिति संवृतिं विकल्पं यदुक्तं 'अनिरूपिततत्त्वार्थ-प्रतीतिः संवृतिर्मता' अस्येति निर्विकल्पकस्य तमिति विकल्पं तन्मात्रेति विषयोपदर्शकत्वमात्रहेतुत्वात् तस्येति प्रामाण्यस्य अस्येति दर्शनस्य तमिति अध्यवसायम् तेनेति निर्विकल्पकेन तस्येति व्यवसायस्य तद्व्यापारेति दर्शनव्यापारस्वरूपः सएवेति व्यवसायः तत्रेति दर्शने तत्कारणीति विकल्पस्य कारणभावं भजमानं संशयेत्यादि तस्येति निर्विकल्पकस्य दर्शनविषयेति दर्शनस्य योसौ विषयस्तस्य यत्सामान्यं तत्रवर्त्तित्वात् तज्जनकमिति व्यवसायोत्पादकं दर्शनेति दर्शनस्य विषयो घटादिस्वलक्षणं तस्य यत्सामान्यं तस्य तद्विषयेति सामान्यगोचरविकल्पोत्पादकस्य दर्शनस्य ।

(पं॰)—व्यवसायोत्पत्ताविति विकल्पोत्पत्तौ। यत्रैवेत्यादि श्लोकार्द्धं ग्रन्थेऽस्ति अपरार्द्धंगुरुमुखाल्लिख्यते, अभ्यासपाटवापत्ति—तारतम्यादिभेदतः, अत्रैव च । एनां कल्पनाम्। अस्य निर्विकल्पकदर्शनस्य। व्यवसायंविनैवेत्यादि अत्रापातनिका नन्वस्माभिः प्रमाणतेत्युक्तं भवांश्चविषयोपदर्शकत्वं व्यवस्थापयतीति कोऽयं न्याय इत्येवंरूपा ततइति दर्शनात् । तेनेति व्यवसायेन। तस्येति निर्विकल्पकस्य, तत्कारणीभूयमिति तत्कारणत्वम्। आभेजानमिति प्राप्तम्। तस्येति दर्शनस्य। स्वविषयोपदर्शकत्वापत्तेरिति संशयितस्थाणुपुरुषलक्षणः स्वविषयः। दर्शनविषयसामान्यव्यवसायित्वादिति दर्शनविषयसामान्यं व्यवस्यतीत्येवं शीलं तस्य भावस्तस्मात्। तज्जनकमिति विकल्पजनकम् ।

(रत्ना॰)—अथदृश्यविकल्प्ययोरेकीकरणाद्वस्तूपदर्शकएव व्यवसाय इति चेन्नन्वेकीकरणमेकरूपतापादनमेकत्वाध्यवसायो वा । प्राचिपक्षेऽन्यतरस्यैव स तत्त्वं स्यात् । द्वितीयेतूपचरितमेवानयोरैक्यं । तथाचकथमेषव्यवसायोविषयोपदर्शकः स्यान्नहि षण्डः कुण्डोध्नीत्वेनोपचरितोऽपि पयसा पात्रीं पूरयति। किञ्च तदेकत्वाध्यवसायो दर्शनेन विकल्पेन ज्ञानान्तरेण वा भवेत् । नाद्येन दर्शनश्रोत्रियस्याध्यवसायश्वपाकसंस्पर्शासम्भ-

वात्। नचतस्य विकल्प्यं विषयतामेति। न द्वितीयेन विकल्पकौणपस्य दृश्य दाशरथिं गोचरयितुमपर्याप्तत्वात्। नापि तृतीयेन निर्विकल्पकसविकल्पकविकल्पयुगलानतिक्रमेण दृश्यविकल्प्यद्वयविषयत्वविरोधात् नच-तदुभयागोचरं ज्ञानं तदुभयैक्यमाकलयितुं कौशलमालम्बते। तथाहि। यद्यन्नगोचरयति न तत्तदैक्यमाकलयितुं कुशलं यथा कलशज्ञानं वृक्षत्वशिंशपात्वयोस्तथा च प्रकृतमिति। तन्न व्यवसायजननात् प्रत्यक्षस्य प्रामाण्यमुपपादकं कथंचैतत्क्षणक्षयस्वर्गप्रापणशक्त्यादावप्यनुरूपं विकल्पंकदाचिन्नोत्पादयति। स्वविकल्पवासनाबलससुज्जृंभमाणाक्षणिकत्वादिसमारोपानुप्रवेशादितिचेत् तदपेशलं नीलादावपितद्विपरीतसमारोपप्रसक्तेः। कथमन्यथाविरुद्धधर्माध्यासात्तद्दर्शनभेदो न भवेत् नह्यनंशं दर्शनं क्वचित्समारोपाक्रान्तं क्वचिन्नेति वक्तुं युक्तं। अथ तत्तद्व्यावृत्तिवशादनंशस्यापि दर्शनस्य तथापरिकल्पनाददोषः। समारोपाक्रान्तेभ्यो हि व्यावृत्तमसमारोपाक्रान्तमसमारोपाक्रान्तेभ्यस्तु व्यावृत्तंसमारोपाक्रान्तं तदुच्यतइति। तदप्यसूपपादं। यतो व्यावृत्तिरपि वस्त्वंशं कंचिदाश्रित्यकल्प्येतान्यथा वा। अन्यथाचेच्चित्रभानुरप्यचन्द्रव्यावृत्तिकल्पनया चन्द्रतामाद्रियेत। वस्त्वंशाश्रयणपक्षेतु सिद्धोविरुद्धधर्म्माध्यासस्तथाहि। तद्दर्शनं येन स्वभावेन समारोपाक्रान्तेभ्यो व्यावर्त्तिष्ट नतेनैवाऽसमारोपाक्रान्तेभ्योऽपि येन चाऽमीभ्यो व्यावर्त्तेत न तेनैव तेभ्योपि तयोर्द्वयोरपि व्यावृत्तयोरैक्यापत्तेः। यदिपुनः स्वभावभेदोपि वस्तुनोऽतत्स्वभावव्यावृत्त्याकल्पितएवेति मतं तदाकल्पितस्वभावान्तरकल्पनायामनवस्था स्थेमानमास्तिघ्नुवीत। ततो न व्यवसायजननादस्य प्रामाण्यमनुगुणं किंतु व्यवसायस्वभावत्वादेव एवं प्रामाण्यसहचरं समारोपपरिपन्थित्वमपि वाच्यम्।

(टि०)–अन्यतरस्येति द्वयोर्मध्यादेकस्य सतत्त्वमिति स्वरूपं नद्वितीयस्य विरोधात् एषइति उपचरितैकत्वाध्यवसायः किञ्चतदेकेति तयोः दृश्यविकल्प्ययोरेकीकरणं नचतस्येति दर्शनस्य विकल्प्यामिति वस्तु तदुभयेति तत् दृश्यविकल्पोभयमगोचरोऽविषयोयस्य तथाहीत्यादि यदिति ज्ञानं कर्तृ-

यदिति वस्तु कथंचैतदिति निर्विकल्पकं स्वविकल्पेति स्वाविकल्पार्थमनाद्य-विद्याबलेनोल्लसमानो यो क्षणिकत्वादिसमारोपो भ्रान्तिज्ञानं तस्यानुप्रवेशात् नीलादावपीति निर्विकल्पकदर्शने ऽपि तद्विपरीतेति नीलादिदर्शनाद्विपरीतोविकल्पस्तस्य कथमन्यथेति नीलादौ क्षणक्षयादौ चेत्समारोपानुप्रवेशो न-तुल्यः तद्दर्शनेति नीलादिदर्शनं अथतत्तद्व्यावृत्तीति अन्यापोहसामर्थ्यात् तथेति भेदपरिकल्पनात् अदोषइति भेदस्य वस्त्वंशमिति दर्शनं ततो नव्यवसायेति विकल्पोत्पादकत्वात् अस्येति निर्विकल्पकप्रत्यक्षस्य ।

(पं०)—दृश्यविकल्प्ययोरिति दर्शनविषयविकल्पविषययोः । निर्विकल्पकसवि-कल्पयुगलानतिक्रमेणेत्यादि । यद्विज्ञानान्तरं परिकल्प्यते तन्निर्विकल्पकं वा भविष्यति सविकल्पकं वा भविष्यति। एतद्युगलं नाति क्रामति निर्विकल्पकं चेद् दृश्यंविषयः सविकल्पकं वा तर्हिविकल्प्यंविषयः । स्वविकल्पवासनाबलसमुज्जृम्भमाणेत्यादि मदीयेयं योषिदहमे-नामुद्वक्ष्यामि । अहमेनामुपभोक्ष्ये इत्यादि । तथापरिकल्पनादिति सांशत्वपरिकल्पनात् ।

(रत्ना)०-समारोपपरिपन्थित्वादित्युक्तमिति ।

समारोपं प्ररूपयन्ति ।

## मू०-अतस्मिँस्तदध्यवसायः समारोपइति ।

(रत्ना०)-अतत्प्रकारेपदार्थे तत्प्रकारतानिर्णयः समारोपइत्यर्थः ।

अथैनंप्रकारतः प्रकटयन्ति ।

## मू०-सविपर्ययसंशयानध्यवसायभेदात्त्रेधेति।

(रत्ना०)-उत्तानार्थमदः ।

अथोद्देशानुसारेण विपर्ययस्वरूपं तावत्प्ररूपयन्ति ।

## मू०-विपरीतैककोटिनिष्टङ्कनं विपर्ययइति ।

(रत्ना०)-विपरीताया अन्यथास्थिताया एकस्या एवकोटेर्वस्त्वंशस्य निष्टङ्कनं निश्चयनं विपर्ययइति ।

(टि०)-अथोद्देशेति उद्देशः समासतो निर्देशो व्यासतः ।

अत्रोदाहरन्ति ।

## मू०-यथाशुक्तिकायामिदं रजतमितीति ।

(रत्ना०) यथेत्युदाहरणोपन्यासार्थोऽत्रापि सर्वत्रशुक्तिकायामरजताकारायामिदं रजतमिति। रजताकारतया ज्ञानं विपर्ययो विपरीतख्यातिरित्यर्थः । इतिशब्द उल्लेखार्थो ऽत्रापिउदाहरणसूत्रं चेदमन्येषामपि प्रत्यक्षयोग्यविषयविपर्ययाणां पीतशङ्खज्ञानादीनां तदितरप्रमाणयोग्यविषयविपर्ययाणां हेत्वाभासादिसमुत्थज्ञानानां चोपलक्षाणार्थम् ।

(टि०)-उदाहरणसूत्रमित्यादि तदितरेति प्रत्यक्षेतरम् ।

(पं०)—इतिशब्दउल्लेखार्थ इति उल्लेखोरीतिः। इतरप्रमाणेत्यादि इतरशब्देनात्र परोक्षस्याख्या,

(रत्ना०)-अत्र विवेकाख्यातिवादीवदति विवादास्पदमिदं रजतमिति प्रत्ययो न वैपरीत्येन स्वीकर्त्तव्यस्तथाविचार्यमाणस्य तस्यानुपपद्यमानत्वाद्यद्यथाविचार्यमाणं नोपपद्यते न तत्तथास्वीकर्त्तव्यं। यथा स्तम्भः कुम्भरूपतयेति नचेदं साधनमसिद्धिमधारयत्। तथाहि। किमिदं प्रत्ययस्य वैपरीत्यं स्यादर्थक्रियाकारिपदार्थाप्रत्यायकत्वमन्यथा प्रथनं वा। आद्यभेदे विवादास्पदप्रत्ययप्रत्यायिते पदार्थे किमर्थक्रियामात्रमपि नास्ति तद्विशेषसाध्या वा सा नविद्यते। नाद्यः पक्षः शुक्तिसाध्यायास्तस्याभावात्। द्वितीयेतु ज्ञानकाले सा नास्ति कालान्तरेऽपि वा। ज्ञानकाले तावत्तध्यकलधौतबोधेपि क्वापि सा नास्त्येव।कालान्तरेतु प्रचुरतरसमीरसमीरणाशुव्यपायिपयोबुद्बुदबोधेऽपि सा न विद्यतएव॥ तन्नार्थक्रियेत्यादिपक्षः क्षमकारः। तत्पुरस्सरपक्षेतु तथाविधवैपरीत्यं तस्य स्वेनैव पूर्वज्ञानेनोत्तरज्ञानेन वाऽवसीयेत। नस्वेनैव तेन स्वस्य वैपरीत्यावसाये प्रमातुः प्रवृत्त्यभावप्रसङ्गात् । अथ पूर्वज्ञानेन किंस्वकालस्थेन तत्कालस्थेन वा। नाद्येन तत्काले वैपरीत्यास्पदसंवेदनस्यासत्त्वात् । नापिद्वितीयेन ज्ञानयोर्यौगपद्यासम्भवात् । अथोत्तरज्ञानेन तत्किं विजातीयं सजातीयं वा स्यात्। विजातीयमप्येकसन्तानं भिन्नसन्तानं वा भेदद्वयेपि घटज्ञानं पटज्ञानस्य

वैपरीत्यावसायि भवेत् । सजातीयमप्येकविषयं भिन्नविषयं वा । एकविषयमप्येकसन्तानं भिन्नसन्तानं वा । द्वयमपीदं संवाददत्तहस्तावलम्बं कथंवैपरीत्यावबोधधुराधौरेयतान्दधीत । भिन्नविषयमप्येकसन्तानं भिन्नसन्तानं वा। उभयत्रापि पटज्ञानं पटान्तरज्ञानस्य तथा भवेत् । अथ न सर्वमेवोत्तरज्ञानं प्राक्तनस्यान्यथात्वाववबोधबद्धकक्षं किन्तुयदेवबाधकत्वेनोल्लसति । ननुकिमिदन्तस्य तद्बाधकत्वं तदन्यत्वं तदुपमर्दकत्वं तस्य स्वविषये प्रवर्तमानस्य प्रतिहन्तृत्वं प्रवृत्तस्यापि फलोत्पादप्रतिबन्धकत्वं वा। प्राचिपक्षे मिथ्याज्ञानमपि तस्य बाधकं स्यादन्यत्वस्योभयत्राविशेषात् द्वितीयेघटज्ञानंपटज्ञानस्य बाधकं स्यात् तस्यापि तदुपमर्देनोत्पादात् । तृतीये न प्रवृत्तिस्तस्य तेन प्रतिहन्तुं शक्या ॥ यत्रक्वचन गोचरे प्रागेव प्रवृत्तत्वात् । तुरीयेपि न फलोत्पत्तिस्तस्य तेन प्रतिबद्धुं पार्यते । उपादानादिसंविदोऽपि प्रथममेवसमुत्पन्नत्वात् । किञ्च विपरीतप्रत्यये रजतमसच्चकास्ति सद्वा । असच्चेदसत्ख्यातिरेवेयं स्यात् । सच्चेत् तत्रैवान्यत्रवा । यदितत्रैव तदा तथ्यपदार्थख्यातिरेवेयं भवेत् । अन्यत्रतु सतः कथं तत्रप्रतीतिः पुरस्सरगोचर एव चक्षुरादेर्व्यापारात् दोषमाहात्म्यादितिचेन्न । दोषाणामिन्द्रियसामर्थ्यकदर्थनमात्रचरितार्थत्वेन विपरीतकार्योत्पत्तिं प्रत्यकिञ्चित्करत्वात् । ततस्तथाविचार्यमाणस्यतस्यानुपपद्यमानत्वमसिध्यदेव। नापि व्यभिचारि । विपक्षादत्यन्तं व्यावृत्तेरत एव न विरुद्धमपि । ततः सत्यमेवैतत्संवेदनद्वयमिदमिति प्रत्यक्षं रजतमिति तु स्मरणं करणोद्भूतदोषवशाच्छुक्तिरजतयोः प्रत्यक्षस्मरणयोश्च भेदाप्रतिभासाद्भेदाख्यातिरियमुच्यतइति ।

(टि०)-अत्रविवेकाख्यातिवादी प्रभाकरः तद्विशेषेति तेनपदार्थेन विशेषेण रजतलक्षणेन साध्या साऽर्थक्रिया तस्याइति अर्थक्रियायाः सेति अर्थक्रिया तत्पुरइत्यादि तथेति अन्यथाप्रथनरूपं तस्येति रजतज्ञानस्य स्वेनैवेति तत्कालोत्पन्नरजतज्ञानेन पूर्वज्ञानेनेति तस्मात्तत्कालपूर्वकालोत्पन्नेन अथपूर्वेति भ्रांतिज्ञानपूर्वकालभावियत्तत्पदार्थविषयेनज्ञानेन

तत्कालेति उत्तरज्ञानकालस्थेन तत्काले इति पूर्वज्ञानकाले ज्ञानयोरिति ज्ञानद्वयमेककाले न सम्भवति जुगवन्दोनत्थिउवओगाइति वचनात् आदौ-घटज्ञानं पश्चात्पटज्ञानमिति विजातीयं आदौपटज्ञानं पश्चादपिपटज्ञान-मिति सजातीयं एकसन्तानमिति एकपुरुषस्थज्ञानसन्तानम्॥ उभयत्रा-पीति तथेति वैपरीत्यावसायि जायेत इदंतस्येति पूर्वज्ञानस्य तदिति उत्तरज्ञानं तस्येति पूर्वज्ञानस्य उभयत्रेति मिथ्याज्ञाने सत्यज्ञाने च तस्यापीति घटज्ञानस्यापि तदुपमर्देनेति पटज्ञानोपमर्देन तस्येति पूर्व-ज्ञानस्य तेनेति बाधकस्वभावेनोत्तरज्ञानेन नफलोत्पत्तिरित्यादि तस्येति पूर्वज्ञानस्य तेनेति उत्तरज्ञानेन उपादानेति अर्थग्रहणादिज्ञानस्य अन्यत्रेति हट्टपट्टादौ तत्रेति विपरीतप्रत्यये असिध्यदेवेति सिद्धमेवेत्यर्थः विपक्षादिति स्वीकर्त्तव्यलक्षणात् अतएवेति विपक्षादत्यन्तव्यावृत्तेरेव एतत्संवेदनेति एतत्प्रत्यक्षस्मरणज्ञानोभयम्।

(पं०)—विवेकाख्यातिवादीति भेदाप्रतिभासनवादी अर्थक्रियाकारिपदार्था-प्रत्यायकत्वमिति अर्थक्रियाकारिणं पदार्थं न प्रत्येति न परिच्छिनत्ति। पदार्थेइति रजतरूपे। तद्विशेषसाध्येति विवादास्पदप्रत्ययसाध्या। शुक्तिसाध्यायाइति कुङ्कुमनिक्षेपादिकायाः। द्वितीयेत्विति तद्विशेषसाध्येत्यस्मिन् तावत्तथ्यकलधौत-बोधेऽपीति नकेवलं विपरीतबोधे। क्वापिसानास्त्येवेति साक्रिया। आशु-व्यपायिपयोबुद्बुदबोधेपीति बुद्बुदेष्वपयस्सुबुद्बुदज्ञानमपि चाक्षुषं विनष्टम्। अतो-ज्ञानस्य कालान्तरम्। तत्पुरस्सरपक्षेत्विति अन्यथा प्रथमपक्षे। वैपरीत्यावसाये इति। तत्स्वस्य वैपरीत्यमवस्यति स्वयमेवेति विकल्पे; पूर्वज्ञानेनेति विपरीतज्ञानात् पूर्वज्ञानेन। स्वकालस्थेनेति पूर्वकालस्थेन, तत्कालस्थेनेति वैपरीत्यकालस्थेन तत्किमित्यादि तत् उत्तरज्ञानम्। विजातीयमिति आदौ घटज्ञानं पश्चात् पटज्ञान-मिति विजातीयम् सजातीयमिति आदौ पटज्ञानं पश्चादपि पटज्ञानमिति सजातीयम्। एकसन्तानमिति एकप्रमातृगतम्। भिन्नसन्तानमिति भिन्नप्रमातृगतं। घटज्ञानं पटज्ञानस्य वैपरीत्यावसायिभवेदिति। यद्युत्तरज्ञानं तेनतेन पाश्चात्यस्य वैपरीत्य-मवसीयते। ततश्चघटज्ञानेनोत्तरेण पटज्ञानस्य पाश्चात्यस्य वैपरीत्यमवसीयताम्। एक-

विषयमिति एकं पटं पश्यति। भिन्नविषयमिति बहून् पटान् पश्यति। संवाददत्त-हस्तावलम्बमिति स्वविषयनियतम्। तथा भवेदिति वैपरीत्यावसायिभवेत्। सर्वमेवेति पटज्ञानम्। प्राक्तनस्येति पटान्तरज्ञानस्य। मिथ्याज्ञानमपीति नकेवलं सत्यज्ञानम्। प्रागेव प्रवृत्तत्वादिति उत्तरज्ञानात् प्राक्। उपादानादि-सम्विदोऽपीति यदैवतज्ज्ञानमुत्पन्नं तदैवोत्पादित्सापिजाता, तत्रैवेति विपरीत प्रत्यये अन्यत्रेति टङ्कशैलादौ, तदातथ्यपदार्थख्यातिरिति सत्ख्यातिरेव, पुरस्सर-गोचरएवेति पुरोवर्त्तिपदार्थगोचरएव, विपरीतकार्योत्पत्तिमिति अन्यत्रसतोरज-तस्य तत्र चकासनं विपरीतकार्योत्पत्तिः। तथाविचार्यमाणस्येति तथावैपरीत्येन विचार्यमाणस्य तस्येति विपरीतप्रत्ययस्य। व्यभिचारीति अनैकान्तिकम्।

(रत्ना०)–अत्राभिदध्महे। येतावत्साधनासिद्धिविध्वंसनाय व्यधायिषतविकल्पास्तत्रशुक्त्यादिरूपतयान्यथास्थितार्थस्यान्यथारजताद्यर्थप्र-कारेण यत्प्रथनं तत्स्वरूपं वैपरीत्यंनेदं रजतमित्येव तदुपमर्द्दतः पश्चादुज्जृम्भमाणेन बाधकेनावधार्यतइति ब्रूमः। तथाचान्यथाप्रथनोत्तर-ज्ञानतदुपमर्द्दकत्वविकल्पाभ्यां शेषं तु विकल्पनिकुरुम्बं तुण्डताण्डवाडं-बरविडम्बनामात्रफलमेव। अथविजातीयं सजातीयं वा तदित्यादिप्रका-रेषु किमुत्तरं ते स्यान्ननुवितीर्णमेव। अस्तु यत्किञ्चित्तदुपमर्द्दन चेदुत्पद्यते। तदा तदखिलं बाधकं सत् तस्यतथात्वमाविष्करोतीति उपमर्द्दश्चनप्र-ध्वंसोयतः पटज्ञानप्रध्वंसेनोत्पद्यमानस्य घटज्ञानस्य बाधकत्वं स्यात् किन्तु तत्प्रतिभातवस्त्वसत्वख्यापनं। यन्मदीयवेदने रजतमिति प्रत्यभात् तद्रजतंनभवत्येवेति। अपि च भेदाख्यातावपि प्रत्यक्षस्मरणयोर्भेदाख्यानं किंस्वेनैव वेद्यतइत्यादिसकलविकल्पपेटक माटीकत एवेतिस्ववधायकृत्यो-त्थापनमेतद्भवतः।

(टि०)–अथविजातीयमित्यादि तदिति उत्तरज्ञानं तेइति हेसमा-धानवादिन् तव तस्येति रजतमिति प्रत्ययस्य तथात्वमिति वैपरीत्यं किन्तुतत्प्रतीति तेनपूर्वज्ञानेन प्रतिभातं प्रतिभासितंयद्वस्तु तस्यासत्व-ख्यापनं अपिचेत्यादि भेदाख्याताविति विवेकाख्यातावपि।

(पं०)–पश्चादुज्जृम्भमाणेन बाधकेनावधार्यते इति उत्तरज्ञानेनावधार्यते । तदखिलमिति विजातीयं वा सजातीयं वा तथात्वमिति वैपरीत्यम् तत्प्रतिभातवस्त्वसत्त्वख्यापनमिति असत्त्वख्यापनमुपमर्दः । स्ववधायकृत्योत्थापनमेतदिति यथाकाश्चित्कृत्यां मारिमुत्थापयति साचोत्थिता सतीतमेवहन्ति ।

(रत्ना०)–अथपूर्वानुभूतरजतप्रतिभाने कथं तेन शुक्तिकापेक्ष्येत तत्र संवृतस्वाकारायाः समुपात्तरजताकारायाः शुक्तिकाया एवात्र प्रतिभानात् । वस्तुस्थित्या हि शुक्तिरेवसा त्रिकोणत्वादिविशेषग्रहणाभावात्तु संवृतस्वाकारा चाकचिक्यादिसाधारणधर्म्मदर्शनोपजनितरूप्यस्मरणारोपितरजताकारत्वाच्च समुपात्तरजताकारेत्यभिधीयते । यत्खलु यत्र कर्म्मतया चकास्ति तत्तत्रालम्बनमेतच्च शृङ्गग्राहिकया निर्दिश्यमानायां शुक्तौ समस्त्येव । सैवहि दोषवशात तथाप्रतिभाति । दृष्टं च दोषवशाद्विपरीतकार्योत्पादकत्वं यथा क्षिप्तमन्दाक्षलक्ष्मीकायाः कुलपक्ष्मलाक्ष्यास्तत्ताद्विरुद्धवीक्षणभाषणादि त्वयापिचैतदङ्गीकृतमेव प्रकृतरजतस्मरणस्यानुभूतरजतदेशानुसारिप्रवृत्तिजनकत्वौत्सर्गिककार्यपरिहारेण पुरोदेश एव प्रवृत्तिजनकत्वस्वीकारात् । भेदाग्रहणं सहकारिणमपेक्ष्य प्रकृतरजतस्मरणस्य तदविरुद्धमितिचेत् दोषान्सहकारिणोपेक्ष्य हृषीकस्यापि तत् तथास्तु ॥ किञ्च प्रत्यभिज्ञानेन रजतसंवित्तेः शुक्तिगोचरत्वमवस्थाप्यते । यदेव ममरजतत्वेन पूर्वमचकात् तदेवशुक्तिशकलमित्येव तस्योत्पादात् । अनुमानेन च विवादपदं रजतज्ञानं शुक्तिगोचरं तत्रैवप्रवर्त्तकत्वाद्यदेवं तदेवं यथासत्यरजतज्ञानं रजतगोचरमिति विचारेण वैपरीत्यस्योपपत्तेरसिद्धिदुर्गन्धमेवत्वत्साधनमिति स्थितम् ।

(टि०)–कथन्तेनेति रजतज्ञानेन एवात्रेति रजतज्ञानप्रदेशे यत्खल्विति यद्वस्तु यत्रज्ञाने यथाघटे ज्ञानंजानाति यथाज्ञानेघटंजानाति इत्यत्रदृश्यते तादिति वस्तुचकासनं तत्रेति ज्ञाने एतच्चेति वस्त्वालम्बनं शृङ्गेति अङ्गुलीनिर्देशेनेत्यर्थः सैवेति शुक्तिः दोषेति नेत्रदोषः तथेति रजतत्वेन औत्सर्गिकेति मुख्यं भेदाग्रहणमिति इदं रजतमिति प्रत्ययज्ञाने प्रत्यक्ष-

स्मरणयोः तदिति पुरोदेशे प्रवृत्तिजनकत्वं विपरीतकार्योत्पादकत्वं वा हृषीकस्येति इन्द्रियस्य तदिति पुरोदेशे प्रवृत्तिजनकत्वं तथेति अविरुद्धं तस्येति प्रत्यभिज्ञानस्य अनुमानेनेत्यादितत्रैवेति शुक्तिकायामेव तत्रैवेति यद्यत्रैवप्रवर्त्तकं तत्तद्गोचरं तदेवमिति शुक्तिगतं यथासत्येति शुक्तिगतम् ।

(पं०)—अथप्रकृतज्ञाने रजतप्रतिभाने इति मौलः पाठः। पूर्वानुभूतरजतप्रतिभाने इति पाठान्तरम्। पूर्वानुभूतंटङ्कशिलादिकम्। तेनेति विवादास्पदप्रत्ययेन, शुक्तिकापेक्ष्येतेति शुक्तिकापेक्षानयुक्तेत्यर्थः तस्मात्सत्यमेवैतत्सम्वेदनद्वयमिति भावार्थः। तत्रेति विपर्ययज्ञानं रजतप्रतिभासनं न। अत्र प्रतिभासनादित्यतोऽग्रे एतदेव व्याख्यातीतिगम्यम्। कर्मतयेति देवदत्तः शुक्तिशकलं रजतरूपं पश्यति। शृङ्गग्राहिकयेति अङ्गुलीनिर्देशेन। त्वयापि चैतदङ्गीकृतमेवेति शुक्तेरालम्बनत्वम्। तस्योत्पादादिति शुक्तिगोचरत्वोत्पादात्। अनुमानेनेति शुक्तिगोचरत्वमवस्थाप्यते। तदेवमिति यद्यत्रैवप्रवर्त्तकं तत्तद्गोचरम्।

(रत्ना०)—यच्चोक्तं शुक्तिरजतयोः प्रत्यक्षस्मरणयोश्च भेदाप्रतिभासादिति तत्रभेदाप्रतिभासस्तुच्छः कश्चिदुच्येत अभेदप्रतिभासोवा नाद्यः प्राभाकरैरभावानभ्युपगमात्। नापिद्वितीयो विपरीतख्यातिप्रसक्तेर्भिन्नयोरभेदेन प्रतिभासात्। अथभेदोव्यावर्त्तकधर्म्मयोगस्तस्य चाप्रतिभासः साधारणधर्म्मप्रतिभासइति चेन्न। शुक्तिज्ञानेसत्यपि तस्यभावाद्दीप्रतादेस्तत्रापि प्रतिभासात्। अथनतत्रतस्यैवप्रतिभासस्त्रिकोणतादिव्यावर्त्तकधर्म्माणामपि प्रतिभासादिति चेत् तर्हिसावधारणः साधारणधर्म्मप्रतिभासः प्रकृतरजतबोधेऽपि नास्त्येव रजतगतस्य रजतत्वस्येव शुक्तिगतस्यत्वनियतदेशकालस्मर्यमाणरजतासम्भाविनियतदेशकालत्वस्य व्यावर्त्तकधर्म्मस्य प्रतिभानादिति। ग्रहणस्मरणसंवित्ती अपि स्वसंविदिते प्राभाकराणां तेचयदिस्वरूपेणप्रतिभातस्तदानरजतार्थिनस्तथाप्रवृत्तिः स्यात्। अथग्रहणं स्मरणरूपतया प्रतिभाति तदाविपरीतख्यातेरस्पष्टतया प्रतिभानमनुभूतरजतदेशे प्रवृत्तिश्चस्यात्।

अथस्मरणंग्रहणरूपतया तदापि विपरीतख्यातिरेव प्रभूतं चात्रवक्तव्यं। तच्चोक्तमेव बृहद्वृत्तौ वितत्य श्रीपूज्यैः।

(टि०)-भेदाप्रतिभासइति प्रसज्यनञ्ज्ञाप्यप्रतिषेधमात्रम् तुच्छइति अभावरूपः व्यावर्त्तकेति व्यावर्त्तको धर्म्मस्त्रिकोणत्वादिः सत्यपि तस्येति साधारणधर्म्मप्रतिभासस्य चाकिचिक्यादिरूपस्य। अथनतत्रेति सत्येपि शुक्तिज्ञाने तस्यैवेति साधारणधर्म्मप्रतिभासस्यैव ग्रहणेत्यादि शुक्तिकायामिदं रजतमिति मिथ्याज्ञानलक्षणे ऽयमर्थः यथासत्येशुक्तिज्ञाने दीप्रतादिसाधारणधर्म्माणां त्रिकोणत्वादिव्यावर्त्तकधर्म्माणांच प्रतिभासस्तथात्रशुक्तौ इदं रजतमिति मिथ्याज्ञानेपि उभयेषां प्रतिभासोनकेवलः साधारणधर्म्मप्रतिभास इति तेइति ग्रहणस्मरणसंवित्ती येनैवस्वभावेनेत्यादि शुक्तेर्ग्रहणं रजतस्यस्मरणं यदिग्रहणस्य स्मरणरूपता भवति तदास्मरणस्यैव ग्रहणपर्यायस्य प्रत्यक्षस्य अस्पष्टतया प्रतिभासः स्पष्टश्चप्रतिभासः विशदंप्रत्यक्षमिति वचनात्। अनुभूतेत्यादि प्रत्यक्षस्मरणयोरेकरूपतायां सत्यां प्रत्यक्षस्य अनुभूतरजतदेशे स्मरणविषयप्रवृत्तिः प्राप्नोतीति भावः।

(पं०)—तुच्छइति निरुपाख्यः कोऽर्थअभावः अनेनप्रसज्यनञ्लक्षितः। अभेदप्रतिभासोऽवेत्यनेन पर्युदासः। पर्युदासः सदृग्ग्राहीप्रसज्यस्तु निषेधकृत् द्वौनञौहिसमाख्यातौ पर्युदासप्रसज्यकौ॥ व्यावर्त्तकधर्मयोगइति व्यावर्त्तको धर्मस्त्रिकोणत्वादिः। तस्येति साधारणधर्मस्य। तस्यैवेति दीप्रतादेरेव, सावधारणइति निश्चितः, साधारणधर्मप्रतिभासइति दीप्रतादिः।

अथ संशयं लक्षयन्ति।

## मू०-साधकबाधकप्रमाणाभावादनवस्थितानेककोटिसंस्पर्शिज्ञानं संशयइति।

(रत्ना०)—उल्लिख्यमानस्थाणुत्वपुरुषत्वाद्यनेकांशगोचरयोः साधकबाधकप्रमाणयोरनुपलंभादनवधारितनानांशावलम्बिविधिप्रतिषेधयोरसमर्थं सम्वेदनं संशयइत्यर्थः समिति समन्तात्सर्वप्रकारैः शेतइवेति व्युत्पत्तेः।

(टि०)-शेतइति आत्माऽस्मिन्निति अनवधृतसाध्यसाधनसम्बन्धादप्यनुमानात्साध्यसिद्धौ सश्यामस्तत्पुत्रत्वात् धवलः प्रासादः काकस्यकाष्र्ण्यादित्यादीनामपिगमकत्वप्रसंगः ।

(पं०)—सामिति समन्तात् सर्वप्रकारैः शेतइवेति व्युत्पत्तेरिति । संसम्यक् शेते आत्मा-अस्मिन्निति तु मलयगिरिमिश्राः ।

उदाहरन्ति ।

## मू०-यथायंस्थाणुर्वापुरुषोवेति ।

व्यक्तम् ।

(रत्ना०)-अयं च प्रत्यक्षविषये संशयः । परोक्षविषयेतु यथाक्वापि विपिनप्रदेशे शृङ्गमात्रदर्शनात्किङ्गौरयं स्याद्गवयोवेत्यादि ।

अथानध्यवसायस्वरूपम्प्ररूपयन्ति ।

## मू०-किमित्यालोचनमात्रमनध्यवसाय इति।

(रत्ना०)-अस्पृष्टविशिष्टविशेषं किमित्युल्लेखेनोत्पद्यमानं ज्ञानमात्रमनध्यवसायः प्रोच्यते समारोपरूपत्वं चास्यौपचारिकमतस्मिंस्तदध्यवसायस्य तल्लक्षणस्याभावात् समारोपनिमित्तंतु यथार्थापरिछेदकत्वम् ।

(पं०)—समारोपनिमित्तमिति समारोपोऽपि किमपिनिमित्तमपेक्ष्यप्रवर्त्तते । यथा-माणवकेऽग्नित्वं समारोपितम् ।

उदाहरन्ति ।

## मू०-यथागच्छत्तृणस्पर्शज्ञानमिति ।

(रत्ना०)-गच्छतः प्रमातुस्तृणस्पर्शविषयं ज्ञानमन्यत्रासक्तचित्तत्वादेवं जातीयकमेवं जातीयकमेवं नामकमिदं वस्त्वित्यादिविशेषानुल्लेखिकिमपि मयास्पृष्टमित्यालोचनमात्रमित्यर्थः प्रत्यक्षयोग्यविषयश्चायमनध्यवसायः एतदुदाहरणदिशाच परोक्षयोग्यविषयोप्यनध्यवसायोऽवसेयः । यथाकस्यचिदपरिज्ञातगोजातीयस्य पुंसः क्वचनवननिकुञ्जे सास्नामात्रदर्शनात् पिण्डमात्रमनुमाय कोनुखल्वत्र प्रदेशे प्राणी स्यादित्यादि ।

अथ प्रमाणलक्षणसूत्रोपात्तं परशब्दं व्याख्यान्ति ।

## मू०-ज्ञानादन्योऽर्थः पर इति ।

(रत्ना०)-ज्ञानाद्ग्राहकात्सकाशादन्यो ग्राह्यतया पृथग्भूतोऽचेतनः सचेतनोवाऽर्थोर्थक्रियार्थिभिरर्थ्यमानः परः परशब्दवाच्यः ॥

(पं०)—परमतिकोपनत्वादिना तैक्ष्ण्यं मनसि विमृश्य अचेतनः सचेतनोवेति । अचेतनोघटादिः सचेतनोगवादि ।

(रत्ना०)-अत्र शून्यवादिनः कतिपयविकल्पाटोपोच्चण्डतुण्डमुखरध्मायन्ते । अहोआर्हताः किंज्ञानं कश्चार्थः । ग्राहकमन्तर्ज्ञानं ग्राह्योबाह्योऽर्थ इति चेत्कस्य ज्ञानं ग्राहकमर्थस्य चेदर्थ एवानर्थमूलं तर्हिसएवोन्मूलनीयस्तथाहि ॥ किमयमणुरूपः स्थूलरूपस्तदुभयस्वभावोनुभयस्वभावो वा । अणुरूपश्चेत् कुतोणूनामवधारणं । प्रत्यक्षादनुमानाद्वा । प्राचिपक्षे किंयोगिप्रत्यक्षादस्मदादि प्रत्यक्षाद्वा । धुर्यः श्रद्धामात्रावधार्यो द्वितीयस्त्वनुभूतिपराभूतः । नहिवयमयं परमाणुरयं परमाणुरिति स्वप्नेपि प्रतीमः स्तम्भोयं कुम्भोयमित्येवमेवनः सदैव संवेदनोदयात् अथानुमानात्परमाणुप्रवेदनं किमवधृतसाध्यसाधनसम्बन्धात् तदितरस्माद्वा । नतावत्तदितरस्मादतिप्रसङ्गसङ्गमात् प्राचिकप्रकारे तु सम्बन्धावधारणं प्रत्यक्षेणानुमानेन वा । नप्रत्यक्षेण । अणूनामतीन्द्रियत्वेन तैः सहाविनाभावस्य क्वापिलिङ्गे ग्रहीतुमशक्यत्वात् । अनुमानेनापि तेनैवानुमानान्तरेण वा तदवधारणं । नतावत्तेनैव परस्पराश्रयप्रसङ्गात् सतिसम्बन्धावधारणे तदनुमानोत्थानं सतिचास्मिंस्तदवधारणमिति । अनुमानान्तरमपि गृहीतप्रतिबन्धमगृहीतप्रतिबन्धमेववा प्रवर्त्ततेत्याद्यावृत्तावनस्थादौस्थ्योपस्थापनं तन्नानुमानादपि परमाणुप्रतीतिः किञ्चामी परमाणवो नित्यावा स्युरनित्यावा नित्याश्चेत्किमर्थक्रियाकारिणो ऽकिंचित्करा वा उदीचीनस्तावत्पक्षः क्षोदीया नन्तरिक्षवृक्षवत्तेषामसत्त्वापत्तेः । अर्थक्रियाकारित्वं तु तेषां क्रमेण युगपद्वा । क्रमेण

चेत्किंस्वभावाभेदेन तद्भेदेन वा। स्वभावाभेदभिदायां ते येनैव स्वभा-वेन प्राच्यं कार्यमर्ज्जयन्ति तेनैवोत्तरमपि यद्वा येनैवोत्तरं तेनैव प्राच्य-मपि। प्रथमे प्रथमकार्यकाल एवोत्तरस्याप्युत्पत्तिप्रसक्तिस्तद्वत् द्वितीये द्वितीयकार्यकालएव प्रथमस्यापि प्रभवप्राप्तिः। तद्भेदेवस्वभावभेद-पक्षे क्षणिकत्वापत्तिस्तल्लक्षणत्वात्क्षणभङ्गुरतायाः। युगपत्पक्षे सकृदेव सकलस्वकार्यकार्यपुञ्जस्यार्ज्जितत्वाद् द्वितीयादिक्षणे तेषामसत्त्वं स्यात्। तन्नामी नित्याः। अनित्याश्चेत्क्षणिकाः कालान्तरस्थायिनो वा। क्षणिकाश्चेत् किमकस्माद्भवन्ति कारणाद्वाकुतोपि। अकस्माच्चेत् ननुकिमिहकारणप्रतिषेधमात्रं भवनप्रतिषेधः स्वात्महेतुकत्वं निरुपाख्य-हेतुकत्वं वा विवक्षितं। आद्ये भवनस्यानपेक्षत्वेन सदा सत्त्वस्यासत्त्वस्य वा प्रसक्तिः। नित्यसत्त्वमसत्त्वंवाहेतोरन्यानपेक्षणादित्युक्तेः। द्वितीये प्रागिव पश्चादपि नामी भवेयुः तृतीये कथमुत्पत्तिस्तेषां स्वयमसतां स्वोत्पत्तौ व्यापार व्याहतेः। तुरीये प्रागपि सत्त्वापत्तेस्तेषां सनातनत्वं स्यात् कारणाद्भवनपक्षेतु स्थूलं किञ्चित् तेषां कारणं परमाणएव वा। नस्थूलं परमाणुरूपार्थपक्षस्यैव कक्षीकारात्। परमाणवश्चेत्ते किंसन्तो ऽसन्तः सदसद्रूपा अनुभयस्वभावा वा स्वकार्याणि कुर्युः. सन्तश्चेत् किमुत्पत्तिक्षणएव द्वितीयादिक्षणेपि वा। नाद्यस्तदानीमुत्पत्तिमात्रव्य-ग्रत्वात् तेषां। अथ भूतिर्येषां क्रिया सैवकारणं सैववोच्यतइति वचनाद् भवनमेव तेषामुत्तरोत्पत्तौ कारणतेति चेदेवं तर्हि रूपाणवो रसाणूनां तेच तेषामुपादानं स्युरुभयत्र भवनाविशेषात् नद्वितीयः क्षणक्षयक्षया-पत्तेः। अथासन्तस्ते तदुत्पादकास्तर्हितत्सत्ताक्षणमेकमपहायसर्वदात-दुत्पादप्रसङ्गस्तद्भवनस्य सर्वदाऽविशेषात्। सदसद्रूपपक्षस्तु दुर्न्निरोध-विरोधानुबन्धदुर्द्धरः। यदिहि तेसन्तः कथमसन्तस्तथाचेत् कथंसन्तः। अनुभयस्वभावभेदोप्यसाधुर्विधिप्रतिषेधयोरेकतरप्रतिषेधेऽन्यतरस्यावश्य म्भावात्। तन्नाणवः क्षणिकाः सूक्ष्ममनीषामार्गं मैयरुः। नापि-कियत्कालस्थायिनः। क्षणिकपक्षोपक्षिप्तप्रतीकारस्यात्राप्यवतारात्।

किंच । कियत्कालस्थायिनोप्यमी किमर्थक्रियापराङ्मुखास्तत्कारिणो वा भवेयुः प्रथमभिदायामम्बरोद्भवाम्भोरुहसौरभवदसत्त्वापत्तिः । उदग्विकल्पे किमसद्रूपं सद्रूपमुभयरूपमनुभयरूपं वा ते कार्यंकुर्वीरन् असद्रूपञ्चेत् कथङ्करिकेसरकलापादेरपि नकरणं । सद्रूपञ्चेत् कथन्तस्य करणं सतोपि करणे कथं कदाचित्क्रियाविरतिः । तृतीयतुरीयभेदौ तु प्राक्प्रोक्तसदसद्रूपादिभेदवद्भञ्जनीयौ । तन्नाणुरूपोऽर्थः सर्वथास्थेमानमातनितुं नापिस्थूलरूपो यतस्तादृशोप्यसौ नित्यो ऽनित्यो वा स्यात् । नतावन्नित्यः परमाणुनित्यतानिराकरणानुसारेणास्यापि व्यपासितुं शक्यत्वात् । नाप्यनित्यः यतस्तस्यसमुत्पादे स्थूलमेव किञ्चित्कारणमणवो वा प्राच्यः पक्षः स्थवीयान् स्थूलाद्वैतवादस्य वावदूकानां वदितुमयुक्तत्वात् । सूक्ष्मापेक्षयैव स्थूलस्यव्यवस्थानात् कुवलापेक्षया कुवलयस्येव । अथाणवस्तत्कारणं तर्हि तदऽग्रेतनस्तदुभयस्वभावार्थपक्षः कक्षीकृतः स्यात् । अस्त्वयमेवेति चेत् । तर्हि ते निरतिशयाः सातिशयावा स्थूलमर्थं प्रथयेयुः । आद्येभेदे भूर्भुवः स्वस्त्रयीकुहरकोणकुट्टितैकैकपरमाणुभिर्विशकलितैरपि सदैव तदुत्पादनप्रसङ्गः द्वितीयेतु कस्तेषामतिशयः एकदेशावस्थितिः संयोगः क्रियावा । प्रथमपक्षे क्षोणीमण्डलालम्बिपरिमण्डलैः स्थूलैककार्यक्रियाप्रसक्तिस्तस्यैकदेशरूपत्वात् । अथ यावति प्रदेशे कतिपयेपि परमाणवः कार्यमेकमर्ज्जयन्ति तावानेवैकः प्रदेशो नसकलमिलामण्डलमिति चेत्तर्हीतरेतराश्रयपिशाच प्रवेशः । सिद्धेहिकार्ये देशैक्यसिद्धिस्तत्सिद्धौच तत्सिद्धिरिति । संयोगश्चेदतिशयः सकिन्नित्यो ऽनित्योवा । यदिनित्यस्तदासदापितदुत्पाद्यकार्योत्पादप्रसङ्गः । अनित्यश्चेत् किमन्यतएव तेभ्योपि वा प्रादुःष्यात् नाद्योभेदस्तदाधारधर्म्मस्यान्यत एवोत्पत्तिविरोधात् । द्वितीयेतु तदुत्पत्तावपि निरतिशयाः सातिशयावा ते व्याप्रियेरन् । प्राचि प्राचीन एवदोषः द्वितीयेत्वतिशयोत्पत्तावप्यतिशयान्तरेण भाव्यं तत्रापि तेनेत्यनवस्थाकदर्थनं किञ्चायं संयोगस्तत्स्वभावभूतस्तत्पृथग्भूतो

वा। प्राच्ये परमाणवएव नकश्चित्संयोगो नाम द्वितीयेतु सर्वथापृथग्भूतः कथंचिद्वा। कथंचित्पक्षस्तावद्विरोधबाधितः सर्वथापक्षेतु संबद्धोऽसंबद्धोवा तत्रासौ स्यात्। असम्बद्धविधायां तेषामेषइति सम्बन्धायोगः सम्बद्धस्तु संयोगेन समवायेन तादात्म्येन तदुत्पत्त्याऽविष्वग्भावेनवा। नसंयोगेन तस्य गुणरूपेसंयोगे सम्भवाभावात्। निर्गुणागुणाइतिवचनात्। नसमवायेन यतोयावदयमेकं संयोगमेकत्र सम्बन्धयति तावदन्यत्राप्येनं किन्नसम्बन्धयेदस्य सर्वत्रैक्यात्। नतादात्म्येन भेदपक्षकक्षीकारात्। नापितदुत्पत्त्या परमाणुभ्यः संयोगोत्पादस्य प्रागेव व्यपास्तत्वात्। नाप्यविष्वग्भावेन तस्य कथञ्चित्तादात्म्यरूपत्वात् तत्रचकथंचिदित्यन्धपदंविरोधावरोधदुर्द्धरत्वात् किंचायंसंयोगः सर्वात्मनैकदेशेनवाणूनाम्प्रणिगद्येत प्रथमेपिण्डोणुमात्रः स्यात् द्वितीये षड्केन युगपद्योगात्परमाणोः षडंशतास्यादिति परमाणुकथाप्यस्तमियात्। तन्नसंयोगोतिशयः। एतेन क्रियारूपातिशयपक्षोपि प्रतिक्षिप्तः किञ्चायंस्थूलोऽवयवी निराधारः साधारो वा। नतावन्निराधारः साधारप्रतीतिविरोधात्। साधारश्चेत् किमेकावयवाधारोऽनेकावयवाधारोवा प्रथमे प्रतीतिविरोधस्तथाहि प्रतीतिरिहावयवेष्ववयवीति नावयवे ऽवयवीति। अथानैकावयवाधारस्तत्राप्यविरोध्यनेकावयवधारो विरोध्यनेकावयवाधारोवा नप्राच्यश्चलाचलस्थूलास्थूलनीलानीलादिरूपाणामवयवानां विरोधप्रतीतेः। अथद्वितीयस्तर्हि नैकः स्थूलोऽवयवीस्याद्विरुद्धधर्माध्यासात्। अपिचासौतेषु वर्त्तमानः सामस्त्येनैकदेशेन वा वर्त्तेत। सामस्त्येनवृत्तावेकस्मिन्नेवावयवे परिसमाप्तत्वादनेकावयववृत्तित्वं नस्यात् एकदेशेन वृत्तौ निरंशत्वं तस्योपगतंविरुध्येत। सांशत्वेवा तेप्यंशास्ततोभिन्नाअभिन्ना वा भवेयुः भिन्नत्वेपुनरप्यनेकांशवृत्तेरेकस्य सामस्त्यैकदेशविकल्पानतिक्रमादनवस्था अभिन्नत्वे न केचिदंशाः स्युरिति न तदुभयस्वभावार्थपक्षोपि सङ्गतिशृङ्गसङ्गमगात्। अनुभयस्वभावभेदोप्युपेक्षाक्षेत्रं प्रेक्षाणां परमाणुस्थूलयोः

परस्परप्रतिषेधात्मकत्वेनान्यतरप्रतिषेधे तदितरविधेरवश्यंभावादिति नार्थः काश्चिद्विचारचूलामालम्बते । तदभावे तद्ग्राहकतया संमतं ज्ञानमपि तथैव । किंचैतदर्थसमकालं । तद्भिन्नकालंवा । तद्ग्राहकं कल्प्येत । प्राक्कल्पनायां त्रिलोकीतल्पोपगता अपि पदार्थास्तत्र प्रथेरन् समकालत्वाविशेषात् तदन्यप्रकारेतु निराकारं साकारं वा तत्स्यात् । प्रथमे प्रतिनियतपदार्थपरिच्छेदानुपपत्तिः द्वितीयेतु किमयमाकारो व्यतिरिक्तो ऽव्यतिरिक्तो वा ज्ञानात् । अव्यतिरेके नकश्चिदाकारो नाम तथाच निराकारप्रकारप्रकाशितः परीहारः । व्यतिरेके चिद्रूपो ऽचिद्रूपो वायं भवेत् चिद्रूपश्चेत् तदानीमाकारोपि वेदकः स्यात् तथाचायमपि निराकारः साकारोवा तद्वेदको भवेदित्यावर्त्तनेनानवस्था । अथाचिद्रूपः किमज्ञातो ज्ञातो वा तज्ज्ञापकः स्यात् । प्राचीने चैत्रस्येव मैत्रस्याप्यसौ तज्ज्ञापकः स्यात् । तदुत्तरेतु निराकारेण साकारेण वा ज्ञानेन तस्यापि ज्ञानं स्यादित्याद्यावृत्तावनवस्थैवेति नज्ञानमपि किञ्चिच्चतुरचेतोगोचरे सञ्चरति । ततः सर्वशून्यतैवपरं तत्त्वमवास्थितेति सर्वापलापि विकल्पसंक्षेपः ।

(टि०)–तेषामिति परमाणूनां असत्त्वमिति यतोऽर्थक्रियाकारित्वं नः संमतं नतुकिमिहेत्यादि भवनप्रतिषेधइति कस्मादपि नभवतीत्यर्थः निरुपाख्येति आद्यन्तोपाख्यानरहितत्वात्सनातनः शाश्वतइत्यर्थः नित्यं सत्वमिति अहेतोरिति निर्हेतुकपदार्थस्य अन्येति कारणाभावात् अथभूतिरित्यादि सैवेति अन्यवस्तूनां कारणं सैवभूतिरेव तेचेति रसाणवः तेषामिति रूपाणूनां अथासन्तइत्यादि तत्सत्तेति यस्मिन् क्षणे तेषां सत्त्वमभूत् तदपहाय द्वितीयादिक्षणेषु तेषामसत्वात् क्षोणीमण्डलेत्यादि परिमण्डलैरिति समस्तपरमाणुभिः एककार्यस्य क्रियाविधानं तस्याः प्रसङ्गः तस्येति स्थूलकार्यस्य नसमवायेनेत्यादि यथातेघटादिकं कार्यमुत्पादयन्तो ऽतिशयमपेक्षन्ते एवं संयोगमुत्पादयन्तोप्यातिशयमुपेक्षिष्यन्ते अयमिति समवायः एकत्रेति पदार्थे एनमिति सम्बन्धः अस्येति समवायस्य

तस्येति अविष्वग्भावस्य तत्रेति अविष्वग्भावे अन्धपदमिति प्रकाश रहितं निस्तेजस्कमन्धलमिति लोकप्रसिद्धेः साधारेति अवयवलक्षणाधार-दर्शनात् अपिचासाविति स्थूलावयवी तेष्विति अवयवेषु तस्योपगत-मिति अवयविनोऽङ्गीकृतं ततइति अवयविनः सकाशात् तदभावइति अर्थाभावे तद्ग्राहकेति अर्थग्राहकतया तथैवेति विचारचूलानालम्ब-नमेव किञ्चैतदर्थेत्यादि एतदिति ज्ञानं तद्ग्राहकमिति अर्थग्राहकं तत्रेति ज्ञाने तदग्येति तद्भिन्नकालपक्षे तदिति ज्ञानं तथाचेति एवं सति आकारप्रतिषेधेसति अयमिति आकारः तथाचेति आकारस्यापि अर्थप्रकाशकत्वेसति अयमपीति आकारोपि पुनरपि पूर्वविकल्पा-वर्त्तनात् आपिशब्दप्रयोगः तद्वेदकइति अर्थज्ञापकः तज्ज्ञापकइति अर्थ-वेदकः असाविति आकारः तदुत्तरेइति ज्ञातपक्षे तस्यापीति आका-रस्यापि अत्रापि अपिशब्दः प्रागवत् ।

(पं०)—नतावत्तदितरस्मादति प्रसङ्गसङ्गमादिति अनवधृतसाध्यसाधनसम्ब-न्धाद्प्यनुमात् साध्यसंसिद्धौ सश्यामस्तत्पुत्रत्वात् धवलः प्रासादः काकस्य कार्ष्ण्यादित्या-दीनामपि गमकत्वप्रसङ्गः । प्राचिक प्रकारेइति अवधृतसाध्यसाधनप्रकारे । सम्ब-न्धावधारणमिति सम्बन्धः केनप्रमाणेनावधारित इत्याशयः । अणूनामतीन्द्रि-यत्वेनेति क्षितिधरकन्धरान्तरितोऽहिवह्निः प्रत्यक्षोऽस्ति यःकश्चित्तमारोहति सोऽवश्यंसा-क्षात्कुरुते अमीचपरमाणवोऽतीन्द्रियास्तैः सहाविनाभावोदुर्घटः । अविनाभावस्येति सम्बन्धस्य । तदवधारणमिति सम्बन्धावधारणम् । क्षोदीयानिति क्षुद्रोऽसारइत्यर्थः। तद्वदिति प्राच्यकार्यवत् । अनपेक्षत्वेनेति कारणस्या पेक्षा नास्ति। नित्यं सत्त्व-मित्यादि श्लोकार्द्धम् । उत्तरार्द्धन्तु अपेक्षातोहिभावानां कादाचित्कत्वसम्भवः ॥ सन्त-श्चेदिति स्वकार्यं कुर्युरिति योगः। क्षणक्षयक्षयापत्तेरिति । क्षणिकपक्षस्य चर्च्य-मानत्वात् । तदुत्पत्तावपि निरतिशयाः सातिशया वा ते व्याप्रियेरन्निति यथाहि ते घटादिकं कार्यमुत्पादयन्तोऽप्यतिशयमपेक्षिष्यन्ते एवं संयोगमुत्पादयन्तो ऽप्यति-शयमपेक्षिष्यन्ते। अत्र च कथञ्चिदित्यन्धपदमिति उभयांशग्राहकत्वेनानिर्णाय-कत्वात् । साधारणप्रतीतिविरोधादिति । अवयवलक्षणाधारदर्शनात् । चला-चलस्थूलास्थूलनीलानीलादि रूपाणामिति आदिशब्दादावृतानावृतादि ।

(रत्ना०)—तदेतदखिलमनल्पपलालपूलकूटकल्पमप्रतिमोत्तरकृशानुकणमात्रसाध्यं तथाहीदं प्रमाणमूलमालप्येतान्यथावा । अन्यथाचेदुत्तिष्ठोत्तिष्ठ तर्हि कथमकृथाः प्रामाणिकपर्षदीह प्रवेशम्प्रमाणमूलञ्चेत्तत्प्रमाणमर्थरूपं ज्ञानरूपं वा भवेदित्यादिस्वमार्गणैरेव मर्माविद्धिर्विद्धः कथमुच्छ्वसितुमपिशक्नोषि कथंचप्रमाणाभ्युपगमे शून्यसिद्धिः शून्यरूपमेव प्रमाणमिति चेत्तर्हिशून्यतासिद्धिरपि शून्यैवेति नशून्यसिद्धिः स्यात् । अभ्यधिष्महिच । शून्येमानमुपैतिचेन्ननु तदा शून्यात्मता दुस्थिता । नोचेत्तर्हि तथापि किंनसुतरां शून्यात्मता दुस्थिता। वन्ध्याभेजननीत्यमुष्यसदृशी मध्याश्रयन्शून्यतां शङ्के दुःशकसाहसैकरसिकः स्वामिन्नसौ सौगतः । अथेत्थमेव विचारयतां यदा न किञ्चित्सङ्गतिं गाते तदाशून्यमेव तत्त्वमवतिष्ठतइतिचेत् । तदेतत्प्रबलशृङ्खलस्खलितांघ्रेरुत्प्लवनप्रागल्भ्याभ्यसनं । यतः। विचारोवस्तुरूपश्चेत्किंसिध्येत्सर्वशून्यता त्विचारोवस्तुरूपश्चेत् किं सिध्येत्सर्वशून्यता। नचतवामून्यर्थज्ञानदूषणान्यपि सूपपादानि । यस्मादुभयस्वभाव एवार्थइति नः पक्षः नचाणुभ्यः स्थूलोत्पादः सर्वत्र स्वीक्रियते यतस्तत्कार्यकारणभावमात्रवित्रासने नार्थकथाविश्राम्येत् । स्थूलादपि सूत्रपटलादेः स्थूलस्य पटादेः प्रादुर्भावविभावनात् आत्माकाशादेरपुद्गलकार्यत्वकक्षीकाराच्च यत्रपुनरणुभ्यस्तदुत्पत्तिस्तत्रतत्तत्कालादिसामग्रीसव्यपेक्षाक्रियावशात् प्रादुर्भूतं कथं चित्पृथग्भूतं संयोगातिशयमपेक्ष्येयमविरुद्धैवकेवलंकथंचिदिति किञ्चनत्वञ्चेतस्तुदति तत्रेयं प्रतिक्रिया । एकेनैवहिरूपेणभेदाभेदयोरभिधाने विरोधनिरोधः स्यात् नचैवमिहपर्यायरूपतया भेदस्य द्रव्यरूप तयावा ऽभेदस्यभणनात् । त्वयापि च प्रमाणप्रमेयतत्वं नास्त्येवेत्येकमेव वचनं स्वपरपक्षावपेक्ष्यसाधकबाधकं वा कक्षीकृतमेव । यापिपरमाणोः षडंशतापत्तिरुक्ता साप्ययुक्ता । यतो ऽत्रांशशब्दस्य सम्बन्धनिबन्धनं शक्तिस्वरूपोर्थो विवक्ष्येता ऽवयवलक्षणो वा । नप्राच्येप्रसङ्गः सङ्गतस्तथाऽस्माभि स्तदभ्युपगमात् । द्वितीयेतु नास्त्यविनाभावस्तत्

च्छक्तिमात्रेणैव तत्तत्परमाणुसम्बन्धस्य प्रतिषेद्धुमशक्यत्वात् यदपि निराधार इत्यादि न्यगादि तत्रापि कथंचिद्विरोध्यविरोध्यनेकावयवाविष्वग्भूतवृत्तिरवयव्यभिधीयते तत्रच यद्विरोध्यनेकावयवाधारतायां विरुद्धधर्म्माध्यासनमभ्यधायि तत्कथंचिदुपेयतएव । तावदवयवात्मकस्य तस्यापि कथंञ्चिदनेकरूपत्वात् । यच्चोपन्यस्तं सामस्त्येनैकदेशेनवेत्यादि । तत्रापि विकल्पद्वयानभ्युपगम एवोत्तरं । अविष्वग्भावेनावयविनो ऽवयवेषु वृत्तेः स्वीकारात् । यच्चार्थसमकालमित्याद्युक्तं तत्रापि विकल्पद्वयमपि स्वीक्रियत एव । अस्मदादिप्रत्यक्षं हि योग्यसमकालार्थाकलनकुशलं स्मरणमतीतस्य शाब्दानुमाने त्रैकालिकस्याप्यर्थस्य परिच्छेदके निराकारश्चैतद्द्वयमपि नचातिप्रसङ्गः तद्ग्रहणपरिणामश्चेदाकारस्तदभ्युपगच्छामः स्वज्ञानावरणवीर्यान्तरायक्षयोपशमविशेषवशादेवास्यनैयत्येनप्रवृत्तेः शेषविकल्पनिकुरुम्बडम्बरेऽस्वीकारएवतिरस्कारः निरस्ताशून्यतासेयमाशाः शाक्यवसन्त्यमूः । उन्मीलयचिरान्नेत्रेकौतुकालोकनोत्सुके ।

(टि०)-तदेतदखिलमित्यादि मर्माविद्भिरिति व्यधताडनेमर्म्मन् पूर्वः मर्म्माणिव्यधतीतिक्विप् नहिवृतिवृषिव्यधिरुचिसहितनिषु क्विबन्तेषु प्रादिकारकाणामेवदीर्घइति दीर्घत्वं ग्रहिज्यावयिव्यधीत्यादिनासम्प्रसारणं वेर्ल्लोपः पदान्तेमर्म्मच्छेदकैः शून्येमानमित्यादि यदिप्रमाणमेवशून्यं तदाप्रमाणशून्यत्वात् शून्यतासिद्धिरप्यसिद्धाप्रमाणस्यासिद्धत्वात् यदिप्रमाणं नशून्यं ततः प्रमाणसत्वे सर्वशून्यवादः सापवादतान्दधाति उक्तं च बुद्धस्य नास्तिदेवत्वं मोहाच्छून्याभिधायिनः प्रमाणसिद्धेशून्यत्वे शून्यवादकथावृथा गातेइति गाङ् गतौतेआते अन्तेत्रिषुवचनेषु समानमत्रत्वेकवचनेन निर्देशः यस्मादुभयेति अणुभ्यः स्थूलेभ्योवा समुत्पद्यतेइति द्वयं न इति अस्माकं अणुभ्यः स्थूलोत्पत्तिः स्थूलेभ्यश्च स्थूलोत्पत्तिः आत्माकाशादिः पदार्थः अपौद्गलिकोपिप्रथमानः प्रतीयते यत्रपुनरित्यादि तत्कालादीति पूर्वंहि तेषां परमाणूनां संयोगाख्यः पर्यायोनासीत्पश्चात्तत्कालादिसामग्रीसव्यपेक्षक्रियावशात् प्रादुर्भूतः सचतेभ्योनसर्वथाभिन्नः स्वभावभूतत्वात् अन्यच्चद्रव्यं त्रिकालावस्थायि पर्यायाश्चवार्त्तमानिकाः द्रव्यमाधारः पर्यायाश्चधेयास्तस्मा-

न्नसर्वथाऽभिन्नः किन्तुभिन्नः नचसर्वथाभिन्नः कथंचिदभिन्नोपि याव-तातएवपरमाणवः संयोगरूपतयापरिणमन्तिनपुनः संयोगः पृथग्भूतः इय-मिति उत्पत्तिः विरोधेति विरोधेननिरोधःपर्यायेति क्रमभाविधर्म्मरूपतया नप्राच्येप्रसङ्गइति षडंशतालक्षणंदूषणं तथेति षडंशताप्रकारतया तदभ्यु-पगमादिति परमाण्वङ्गीकारात् नास्त्यविनाभावइति अवयवेषुसत्सुसम्ब-न्धोभवति नान्यथेत्यर्थयतः अवयवैरेवपरमाणुरात्मानं करोति नात्राविना-भावः तैस्तैः परमाणुभिः सहविवक्षितपरमाणोर्यः सबन्धः सप्रतिषेद्धुम-शक्यः केन तत्तच्छक्तिमात्रेणैवेति सासायायाशक्तिस्तत्तत्परमाणुसम्ब-न्धनलक्षणा तन्मात्रेण शक्तिरूपेण सावयवतास्ति नसाक्षात्कथमन्यथा-पश्चादपि इतरपरमाणुसम्बन्धे सावयवतास्यात् क्रोडीकृतचुञ्चुनखपक्षाव-यवाण्डकरसन्यायेन अवयवीति स्थूलोवयवी उपेयतेइति अङ्गीक्रियत एव तस्येति स्थूलावयविनः वैशेषिकैरपि एकस्मिन्नवयविनि बहूनांखण्डा-वयविनामङ्गीकारात् अविष्वग्भावेनेति कथञ्चित्तादात्म्येन समकेति वार्त-मानिकम् शाब्देति आगमः साध्यसाधनयोः सम्बन्धहेतुशक्तिरूपेण प्रति-बन्धंमनासि निश्चित्यानुमानप्रयोक्ता त्रिकालवेदी भवति अर्थसमकालं तद्भि-न्नकाले वा अतिप्रसङ्गइति अनियतपरिच्छेदापत्तिः अस्येति ज्ञानस्य ।

(पं०)—तत्तत्कालादिसामग्रीसव्यपेक्षक्रियावशादिति । भावनियति पुरुषा-काराः कालादयउच्यन्ते । अथवा क्षेत्रकालभावलक्षणासामग्रीभावः स्निग्धरूक्षादिः चलन-क्रियासंयोगोऽचलनक्रियापूर्वको यथाङ्गुल्योः । पर्यायरूपतया भेदस्य द्रव्यरूपतया-वा ऽभेदस्य भणनादिति पूर्वं हि तेषां परमाणूनां संयोगाख्यः पर्यायोनासीत् । पश्चा-त्तत्कालादिसामग्रीसव्यपेक्षक्रियावशात् प्रादुर्भूतः सचतेभ्यो न सर्वथाऽभिन्नो यद्धि यस्माद-भिन्नं तत्तस्य स्वभाव भूतं स्यात् स्वभावश्च न कदाचिदपि व्यपैति यथापरमाणोः परमाणुत्वं व्यपयन्ति च पर्यायाः अन्यच्चद्रव्यं त्रिकालावस्थायि पर्यायाश्चवार्त्तमानिकाः द्रव्यमाधारः पर्यायाश्चाधेयाः तस्मान्नसर्वथाऽभिन्नः किन्तुभिन्नः नचसर्वथाभिन्नः कथञ्चिदभिन्नोऽपि यावता तएवपरमाणवः संयोगरूपतयापरिणमन्ति नपुनः संयोगः पृथग्भूतएतावता अभेदोऽपि । कक्षीकृतमेवेति एतावतात्वयापि कथञ्चित्पक्षोऽङ्गीकृतः । सम्बन्धनिबन्धनशक्ति-स्वरूपइति । संयोगनिमित्तघटोत्पादनसामर्थ्यस्वरूपः । नप्राच्येप्रसङ्गइति अनि-ष्टापादनं हि प्रसङ्गः तदभ्युपगमादिति सांशताङ्गीकारात् । तत्तच्छक्तिमात्रेणैवेति इतरपरमाणुसम्बन्धनशक्तिः । तत्तत्परमाणुसम्बन्धस्य प्रतिषेद्धुमशक्यत्वादिति

तैस्तैः परमाणुभिः सहविवक्षितपरमाणोर्यः सम्बन्धः सप्रतिषेद्धुमशक्यः केन सा सा याशक्तिस्तत्परमाणुसम्बन्धलक्षणा तन्मात्रेण कार्थः शक्तिरूपेण सावयवतास्ति न साक्षात् कथमन्यथा पश्चादपि इतरपरमाणुसम्बन्धे सावयवता स्यात् क्रोडीकृतचञ्चुमत्पक्षाद्यवयवाण्डकरसन्यायेन। **कथञ्चिदनेकरूपत्वादिति** नचैतत्तन्त्रान्तरीयैः सह विरुद्धं वैशेषिकैरपि एकस्मिन्नप्यवयवाविनि बहूनां खण्डावयविनामङ्गीकारात्। **शाब्दानुमाने त्रैकालिकस्यापीति** साध्यसाधनयोर्हिप्रतिबन्धं मनसिनिश्चित्यानुप्रयोक्तात्रिकालवेदी भवति। **निराकारश्चै-तद्द्वयमपीति** तद्ग्रहणपरिणामश्चेदाकारस्तदभ्युपगच्छामः। **निरस्ताशून्यतेत्यादि** पद्येनिरस्तामया। **कौतुकालोकनोत्सुक इति** त्वयाहि शून्यं सर्वमिति कृत्वा नेत्रेनिमीलिते तच्चन यतः सर्वाऽपिदिशो वसन्ति ॥

(रत्ना०)-अथ ब्रह्मवादिवावदूका वदन्ति। युक्तं यदेष सकलापलापी-पापीयानपास्तः आत्मब्रह्मणस्तात्त्विकस्य सत्त्वात्। नच सरलसालरसालप्रियालहिन्तालतालतमालप्रवालप्रमुखपदार्थसार्थोप्यहमहमिकया प्रतीयमानः कथं न पारमार्थिकः स्यादिति वक्तव्यं तस्य मिथ्यारूपत्वात्। तथाहि प्रपञ्चो मिथ्या प्रतीयमानत्वाद्यदेवं तदेवं यथाशुक्तिशकलेकलधौतं तथाचायं तस्मात्तथा।

(टि०)- **नच सरलेत्यादि तस्येति** तालतमालादितरुणतरतरुपर्वता-दिपदार्थसार्थस्य।

(रत्ना०)-तदेतदेतस्य न तर्कवितर्ककार्कश्यं सूचयति। तथाहि मिथ्यात्वमत्रकीदृक्षमाकाङ्क्षितं सूक्ष्मदृशा किमत्यन्तासत्त्वमुतान्यस्यान्याकारतया प्रतीतत्वमाहोस्विदनिर्वाच्यत्वमिति भेदत्रयीत्रिनेत्रनेत्रत्रयीव त्रौकते। प्राचिपक्षद्वये त्वदनङ्गीकारः परीहारः। तार्त्तीयीकविकल्पेतु किमिदमनिर्वाच्यत्वं नाम किं निरुक्तिविरह एव निरुक्तिनिमित्त-विरहो निःस्वभावत्वं वा। न प्रथमः कल्पः कल्पनार्हः। सरलोयं सालोयमिति निश्चितोक्तेरनुभवात्। नापिद्वितीयः निरुक्तेर्हिनिमित्तं ज्ञानं वा स्यात् विषयो वा। न प्रथमस्यविरहः सरलसालादिसंवेदनस्य प्रतिप्राणि-प्रतीतेः। नापिद्वितीयस्य यतो विषयः किंभावरूपो नास्त्वभावरूपोवा प्रथमकल्पनायामसत्ख्यात्यभ्युपगमप्रसङ्गः। द्वितीयकल्पनायान्तु सत्-

ख्यातिरेव उभावपि नस्त इतिचेत्। ननु भावाभावशब्दाभ्यां लोकप्रतीतिसिद्धौ तावभिप्रेतौ विपरीतौ वा। प्रथमपक्षे तावद्यथोभयोरेकत्र विधिर्नास्ति तथाप्रतिषेधोपि परस्परविरुद्धधर्मयोर्मध्यादेकतरविधिनिषेधयोरन्यतरनिषेधविधिनान्तरीयकत्वात्। द्वितीयपक्षेतु नकाचित् क्षतिर्नह्यलौकिकविषयसहस्रनिवृत्तावपि लौकिकज्ञानविषयनिवृत्तिस्तान्निवृक्तिनिवृत्तिर्वा निःस्वभावत्वपक्षेपि निसःप्रतिषेधार्थत्वे स्वभावशब्दस्यापि भावाभावयोरन्यतरार्थत्वे पूर्ववत्प्रसङ्गः। प्रतीत्यगोचरत्वं निःस्वभावत्वमिति चेदत्र विरोधः प्रपञ्चो न प्रतीयते चेत्कथं धर्म्मितया प्रतीयमानत्वं च हेतुतयोपाददे। तथोपादाने वा कथं न प्रतीयते। यथाप्रतीयते न तथेतिचेत् तर्हिविपरीतख्यातेरभ्युपगमः स्यात् किञ्चेयमनिर्वाच्यता प्रपञ्चस्य प्रत्यक्षेण प्रत्यक्षेपि सरलोयमित्याद्याकारं हि प्रत्यक्षं प्रपञ्चस्य सत्यतामेव व्यवस्यति सरलादिप्रतिनियतपदार्थपरिच्छेदात्मनस्तस्योत्पादादितरेतराविविक्तवस्तूनामेव च प्रपञ्चवचोवाच्यत्वेन सम्मतत्वात्। अथकथमेतत्प्रत्यक्षं पक्षप्रतिक्षेपकं तद्धिविधायकमेवेति तथातथाब्रह्मैवविदधाति न पुनः प्रपञ्चसत्यतां प्ररूपयति साहि तदाप्ररूपितास्याद्यदीतरस्मिन्नितरेषां प्रतिषेधः कृतः स्यात् नचैवं निषेधेकुण्ठत्वात्प्रत्यक्षस्येतिचेत् तदयुक्तं यतो विधायकमिति कोर्थः इदमिति वस्तुस्वरूपं गृह्णाति न्यायस्वरूपं प्रतिषेधति प्रत्यक्षमिति चेन्नैवं अन्यरूप निषेधमन्तरेण तत्स्वरूपपरिच्छेदस्याप्यसम्पत्तेः। पीतादिव्यवच्छिन्नं हि नीलं नीलमिति गृहीतं भवति। नेतरथा यदेदमिति वस्तुस्वरूपमेव गृह्णाति प्रत्यक्षमित्युच्यते। तदाऽवश्यमपरस्य प्रतिषेधमपि तत्प्रतिपद्यत इत्यभिहितमेव भवति केवलवस्तुस्वरूपप्रतिपत्तेरेवान्यप्रतिषेधप्रतिपत्तिरूपत्वात्। अपिचविधायकमेव प्रत्यक्षमिति नियमस्याङ्गीकारे विद्यावदविद्याया अपि विधानंतवानुषज्यते सोयमविद्याविवेकेन सन्मात्रं प्रत्यक्षात्प्रतियन्नेव न निषेधकं तदिति ब्रुवाणः कथंस्वस्थ-

(१) विपरीताख्यातिरियमभ्युपगता स्यात् इत्यपिपाठान्तरः।

इतिसिद्धं प्रत्यक्षबाधितः पक्षइति । अनुमानबाधितश्च प्रपञ्चो मिथ्या-नभवत्यसद्विलक्षणत्वाद्यएवं सएवं यथात्मा तथाचायं तस्मात्तथेति प्रतीयमानत्वंचहेतुर्ब्रह्मात्मना व्यभिचारी सहि प्रतीयते । नचमिथ्या अप्रतीयमानत्वेत्वस्य तद्गोचरवचनानामप्रवृत्तेर्मूकतैव तत्र वः श्रायसी[१] स्यात् । दृष्टान्तश्च साध्यविकलः शुक्तिशकलकलधौतेपि प्रपञ्चान्तर्गतत्वेना-निर्वचनीयतायाः साध्यमानत्वात् । किञ्चेदमनुमानं प्रपञ्चाद्भिन्नमभिन्नं वा । यदि भिन्नं तर्हि सत्यमसत्यं वा । यदि सत्यं तर्हि तद्वदेव प्रपञ्चस्यापि सत्यत्वं स्यात् । अथासत्यं तत्रापि शून्यमन्यथाख्यातमनिर्वचनीयं वा । आद्यपक्षद्वयेपि न साध्यसाधकत्वं नृशृङ्गवच्छुक्तिकलधौतवच्च । तृतीयपक्षोप्यक्षमः । अनिर्वचनीयस्यासम्भवित्वेनाभिहितत्वात् । व्यव-हारसत्यमिदमनुमानमतो ऽसत्यत्त्वाभावात् स्वसाध्यसाधकमिति चेत् किमिदं व्यवहारसत्यं नाम व्यवहृतिर्व्यवहारो ज्ञानं तेन चेत्सत्यं, तर्हि पारमार्थिकमेव तत्तत्र चोक्तोदोषः । अथव्यवहारः शब्दस्तेन सत्यं । ननु शब्दोपिसत्यस्वरूपस्तदितरो वा । यद्याद्यस्तर्हि तेन यत्सत्यं तत्पारमार्थि-कमेवेति तदेवदूषणम् । अथासत्यस्वरूपः शब्दः कथं ततस्तस्य सत्यत्वं नाम नहिस्वयमसत्यमन्यस्य सत्यत्वव्यवस्थाहेतुरतिप्रसङ्गात् । अथ कूटकार्षापणे सत्यकार्षापणोचितक्रयविक्रयव्यवहारजनकत्वेन सत्यकार्षा-पणव्यवहारवदसत्येप्यनुमाने सत्यव्यवहारइतिचेत् तर्ह्यसत्यमेव तदनु-मानं तत्रचोक्तोदोषः । अतो न प्रपञ्चाद्भिन्नमनुमानमुपपत्तिपदवीमापे-दानम् । नाप्यभिन्नं प्रपञ्चस्वभावतया तस्यापि मिथ्यात्वप्रसक्तेर्मिथ्यारूपं च तत्कथंनामस्वसाध्यं साधयेदित्युक्तमेव एवंच प्रपञ्चस्यमिथ्यात्वासिद्धेः कथंपरमब्रह्मणस्तात्त्विकत्वं स्याद्यतोबाह्यार्थाभावो भवेदिति ।

(टि०)-तदेतादिति एतद्व्यवहारप्रतिपन्नपदार्थसार्थस्य मिथ्याप्ररूपणेन कदर्थनम् एतस्येति ब्रह्मवादिनः किन्तुवावदूकतामेव वेदयति नप्रथमस्येति ज्ञानस्य नद्वितीयस्येति विषयस्य विरहइति सम्बन्धः ननुभावेत्यादि ताविति भावाभावौ विपरीताविति अलौकिकौ प्रतिषेधापीति नास्तीतिशेषः परस्प-

१ श्रेयसी इत्यपिपाठः ।

रेति भावाभावयोः नान्तरीयेति अविनाभावित्वात् तन्निरुक्तीति लौकिकनिश्चितोक्तिनिषेधः निसइति षष्ठ्यन्तंपदं कलापकेनिरितिसिद्धं स्वभावेति भावस्वरूपोऽभावस्वरूपो वा स्वभावः॥ अन्यतरेति भावाभावयोर्मध्यादेकनिषेधेपरेण भवितव्यं तथोपादानइति धर्म्मित्वोपादाने यतः प्रसिद्धएवहि धर्म्मी क्रियते प्रत्यक्षेपीति निराकारि तस्येति प्रत्यक्षस्य वाच्यत्वेनेति घटादिविवर्त्तरूपेण पक्षेति प्रपञ्चोमिथ्याइत्येतस्य पक्षस्य तद्धीति प्रत्यक्षं विधायकमिति ब्रह्मलक्षणप्रकृतपक्षजनकमेव तथातथेति प्रत्यक्षं कर्तृ तेनतेन प्रकारेण विचार्यमाणं ब्रह्मैवकर्म्मतापन्नं साहीति प्रपञ्चसत्यता तथेति निषिद्धा भवेत् यदीतरास्मिन्निति सरले इतरेषामिति तमालादीनां नचैवमिति प्रत्यक्षेण प्रतिषेधो नकृतः प्रत्यक्षस्य निषेधकुण्ठत्वात् तदाऽवश्यमित्यादि तदिति प्रत्यक्षं प्रतिपद्यतइति मुण्डभूतले घटाभावग्रहणवत् येनहि पदास्खलनादिना मुण्डभूतलं गृहीतं घटाभावोपि तेन गृहीतः केवलेति प्रतिपत्तेर्ज्ञानस्यैव विवेकेनेति निरासेन प्रतियन्निति जानन् प्रतिपूर्वकः इण्गतौ प्रत्येतीति शतृङ्प्रत्ययः गमनार्थाधातवः सर्वेपि ज्ञानार्था इति वचनादवगच्छन्नित्यर्थः तादिति प्रत्यक्षं प्रपञ्चो मिथ्येत्यादि सहीति ब्रह्मात्मा अस्येति ब्रह्मात्मनः तद्गोचरेति ब्रह्मविषयः तद्वदेवेति सत्यानुमानवदेव प्रतीयमानत्वादेव हेतोर्यथाऽनुमानमिदं सत्यं तथाप्रपञ्चोपि प्रतीयमानत्वादेव सत्योऽस्त्वित्यर्थः नृशृङ्गेति शून्यत्वे नृशृङ्गदृष्टान्तः अन्यथाख्यातत्वे शुक्तिशकले कलधौतमिति निदर्शनं तत्तत्रचोक्तदोषइति प्रपञ्चसत्यतालक्षणः यद्यनुमानं व्यवहारसत्येन सत्यंव्यवहारसत्येनप्रपञ्चोपि सत्यः स्यात् इतिभावार्थः तदितरइति सत्यादितरोऽलीक इत्यर्थः तदेवेति प्रपञ्चसत्यतालक्षणम् ततइति शब्दात् तस्येत्यनुमानस्य आपेदानमिति प्रपेदे तस्येति अनुमानस्य तदित्यनुमानम्।

(पं०)—कथं धर्मितया प्रतीयमानत्वं च हेतुतयोपाददइति प्रसिद्धएव हि धर्मी क्रियते। प्रत्यक्षेपीति प्रतिक्षिप्ता। तद्धिविधायकमेवेति आहुर्विधातृप्रत्यक्षं न निषेद्धृविपश्चितः नैकत्वआगमस्तेन प्रत्यक्षेण प्रबाध्यते। तथातथेति घटादिविवर्त्तरूपेण ब्रह्मै-

वेति कर्मतापन्नंब्रह्म अन्यप्रतिषेधे प्रतिपत्तिरूपत्वादिति । मुण्डभूतले घटाभाव ग्रहणवत् येनहि पदास्खलनादिना मुण्डभूतलं गृहीतं घटाभावोऽपि तेन गृहीतः। नृशृङ्गव-दिति शून्यम् । शुक्तिकलधौतवदिति अन्यथाख्यातम् ।

प्रमाणत्वाभिमतज्ञानस्य स्वव्यवसायीति विशेषणं व्याख्यान्ति ।

## मू०-स्वस्य व्यवसायः स्वाभिमुख्येन प्रका-शनं बाह्यस्येव तदाभिमुख्येन करिक-लभकमहमात्मनाजानामीति ।

(रत्ना०)-यथाबाह्याभिमुख्येन बाह्यानुभवनेन प्रकाशनं बाह्यव्यवसायो ज्ञानस्य तथास्वाभिमुख्येन प्रकाशनं स्वव्यवसायः अत्रोल्लेखः करिकलभक मित्यादि । यथाकरिकलभकमितिप्रमेयस्याहमिति प्रमातुर्जानामीति प्रमितेः प्रतिभासस्तथात्मनेति प्रमाणत्वाभिमतज्ञानस्याप्यस्त्येवेति भावः।

(टि०) प्रमितेरिति परिच्छेदस्य प्रमाणत्वेति स्वपरव्यवसायिनः।

स्वव्यवसायमेव स्पष्टदृष्टान्तप्रकटनेन निष्टङ्कयन्ति ।

## मू०-कःखलुज्ञानस्यालम्बनं बाह्यं प्रतिभात-मभिमन्यमानस्तदपि तत्प्रकारं नाभि-मन्येत मिहिरालोकवदिति ।

(रत्ना०)-तदपीति ज्ञानमपि।तत्प्रकारमिति स प्रतिभातत्वलक्षणः प्रकारः प्रतिनियतं स्वरूपं यस्य तत्तत्प्रकारं प्रतिभातमित्यर्थः । यथैवहि गिरिनगरगहनादिकं मिहिरालोकस्य विषयं प्रतिभातमभिमन्यमानैर्मि-हिरालोकोपि प्रतिभातोभिमन्यते लौकिकपरीक्षकैस्तद्वद्ज्ञानस्य विषयं कुम्भादिकं प्रतिभातमभिमन्यमानैस्तैर्ज्ञानमपि प्रतिभातं स्वीकर्त्तव्य-मिति ।

(रत्ना०)--अत्रेयं भट्टचट्टघट्टना। ननु न स्वसंवेदनं वेदनस्य सुन्दरं स्वात्मनि क्रियाविरोधादित्यस्य पारोक्ष्यमेवाक्षूणं कक्षीकरणीयं तदेतदरमणीयं। यतः किमुत्पत्तिर्ज्ञप्तिर्वास्वात्मनि विरुध्येत। यद्युत्पत्तिः साविरुध्यतां नहिज्ञानमात्मानमुत्पादयतीति वयमध्यगीष्महि। अथ ज्ञप्तिर्नैयमात्मनि विरोध मदीधरत्तदात्मनैव ज्ञानस्य स्वकारणकलापादुत्पादात् प्रकाशात्मनेव प्रदीपकलिकालोकस्य। अथप्रकाशात्मनैव प्रदीपालोकोयमुदयामाशिश्रानिति परप्रकाशकोस्तु आत्मानमप्येतावन्मात्रेणैव प्रकाशयतीतितु कौतस्कुतीनीतिरिति चेत्तत्किं तेन प्रकाशितेनैव वराकेण स्थातव्यमालोकान्तराद्वा प्रकाशेनास्य भवितव्यं। प्रथमे प्रत्यक्षबाधा द्वितीयेपि सैवानवस्थापत्तिश्च। अथनासौ स्वमपेक्ष्य कर्म्मतया चकास्तीत्यस्वप्रकाशकः स्वीक्रियते प्रकाशरूपतया तूत्पन्नत्वात् स्वयंप्रकाशतएवेति चेदनेनैव सुधामध्धि। नहिं वयमपि ज्ञानंकर्म्मतयैव प्रतिभासमानं स्ववेद्यमावेदयामहि। ज्ञानंस्वयं प्रतिभासतइत्यादावकर्म्मकस्य तस्य चकासनात्। यथानुज्ञानज्ञानामीतिकर्म्मतयापि तद्भाति तथाप्रदीपः स्वंप्रकाशयतीत्ययमपि तथाप्रथतएव अथावयवैरालोकावयवी प्रकाश्यत इत्यस्वप्रकाशक एवायमिति चेत् ननुतेपिकेन प्रकाशनीयाः। अवयाविनेति चेत् नन्वऽमीषां परस्परगोचरज्ञानजनने सहकारित्वमेव तावत्प्रकाशकत्वमुच्यते। तच्चामीषामज्ञातानां ज्ञातानां वा स्यात्। नाज्ञातानामेवं ह्यनालोकित एव प्रदीपकुड्मलालोकोपि कदाचित्कलशकुलिशादीन् ज्ञापयेत्। ज्ञातानाञ्चेदितरेतराश्रयापत्तिर्ज्ञाताःखल्ववयवा अवयविनं ज्ञापयेयुः सोपिच ज्ञातएव तान् ज्ञापयेदिति। अथ तेषामप्यवयवानामवयवित्वान्निजावयवैर्ज्ञप्तिः करिष्यते तदानीमनवस्था अथ पर्यन्ते केचिदवयवाः स्वयमेवात्मानं ज्ञापयेयुस्तर्हिं ज्ञानमपि स्वयमेवात्मानं निश्चिनोतीति किंनकक्षीकुरुषे। कथंचपारोक्ष्ये ज्ञानस्य ज्ञानं स्यात्। अन्यथानुपपद्यमानार्थप्राकट्यरूपार्थसमुत्थापितार्थापत्तेरिति चेत्। ननु तदर्थप्राकट्यमात्मधर्म्मोज्ञानधर्म्मो ऽर्थधर्म्मो वा भवेत्।

नाद्यः प्रकारः प्रभाकरकक्षापञ्जरप्रवेशप्रसङ्गात् । नद्वैतीयीकः ज्ञानस्य क्षणिकत्वेन तत्क्षणएव क्षीणत्वादुपरितनक्षणोत्पादिष्णोस्तस्य तद्धर्म्मत्वविरोधात् नापितार्तीयीकस्तथात्वेहि चैत्रस्येव मैत्रस्यापि सपदार्थः प्रकटः स्यात् । अथ यस्यैव ज्ञानेन जनयाम्बभूवे ऽसौ तस्यैव तत्प्रकटनं तद्वद्घटं घटस्य प्रतिनियतप्रमातृप्रबोधितप्रदीपाङ्कुरप्रकटितस्याप्यनियतैर्दर्शनात् तन्नियमानुपपत्तेः । अस्तुवैतत्तथाप्ययमर्थधर्म्मोजडश्चिद्रूपो वा भवेत् । यदिजडः कथमर्थदर्शनं स्यात् । अर्थदर्शनं ह्यर्थदृष्टिरर्थज्ञप्तिरुच्यते जडत्वेतु प्राकट्यस्य कथमिदं घटेत ज्ञानप्रमाणशब्दयोश्चैवं सामानाधिकरण्यमसूपपादं यतोज्ञायते ज्ञप्तिर्ज्जन्यते येन तत् ज्ञानमाम्नायते प्राकट्यस्यचजडत्वेनाज्ञप्तिरूपत्वे कथंतज्जनकंप्रमाणं ज्ञानं व्यपदिश्येत चिद्रूपश्चेत् स्वसंवेद्योवेदनान्तरवेद्यो वा यदि स्वसंवेद्यस्तर्हि कृतश्च शीलविध्वंसोनचानङ्गः शमङ्गतइतिन्यायः समायातः स्वात्मनिक्रियाविरोधाद्विज्ञाने स्वसंवित्तिप्रतिक्षेपपातकं कृत्वापि प्राकट्ये तस्याः स्वयं स्वीकारात् । वेदनान्तरवेद्यत्वं पुनरस्य कुतस्त्यं । तथाहि किमयं यावदर्थं यावदक्षव्यापारं वा ऽवतिष्ठत ज्ञानवत्क्षणिको वा भवेत् । नाद्यः पक्षः पदार्थमालोक्य निमीलितलोचनोत्पलयुगलस्य प्रकटतत्प्रतीति प्रसक्तेःनाद्वितीयो ऽक्षादिव्यापारस्य ज्ञानोत्पत्तिमात्रे व्यापारात् प्राकट्यस्य तदपेक्षानुपपत्तेः नापितृतीयः क्षणजातनष्टस्य वेदनान्तरेण वेदितुमशक्यत्वाद्वेदनेतु द्वित्रिक्षणावस्थिति प्रसक्तेः तन्न तद्वेदनमवदातं यतो ऽर्थापत्तिरुल्लसेदिति ।

(टि०)--अथज्ञप्तिरित्यादि तदात्मनेति ज्ञप्तिस्वरूपेणैव प्रकाशात्मनेति प्रकाशस्वरूपेणैव आशिवानिति अशौ।टिव्याप्तौ आत्मनेपदमनित्यमिति न्यायात् क्वसकानाविति क्वसप्रत्ययः एतावन्मात्रेणेति पदार्थप्रकाशनकारणसामग्र्येण किंतेनेति प्रदीपेन आलोकान्तेति दीपवन्नोपपद्येत विश्ववस्तुप्रकाशनं अनात्मवेदनेज्ञानेजगदान्ध्यं प्रसज्येते अस्येति प्रदीपा-

१ जडत्वेन इत्यपिपाठः ।

लोकस्य अमाविति प्रदीपालोकः कर्म्मतयेति यथादीपो दीपज्ञानाति तस्येति ज्ञानस्य ननुतर्पीति अवयवाः नन्वमीषामिति अवयवानाम-वयविनश्च अवयवप्रकाशमन्तरेणावयव्यप्रकाशकः अवयवप्रकाशाद्दते अवयवानिस्तेजस्काः अतएवसहकारित्वं तच्चेति प्रकाशनं अमीषामित्य-वयवानां कथञ्चेत्यादि पारोक्ष्येति ज्ञानस्य परोक्षत्वेऽङ्गीकृते सति ज्ञानमेवकथं ज्ञायतइत्यर्थः अन्यथेति अन्यथा ज्ञानाविनाभाविनी उपपद्यमाना पदार्थप्राक-ट्यलक्षणाअर्थेन कार्येण निष्पादिताया अर्थापत्तिस्तस्याः प्रभाकरेति प्राकट्य-स्यात्मधर्म्मत्वं प्रभाकरैराश्रियेत नभट्टैः ज्ञानस्यक्षणिकत्व इति मीमांसकाहि ज्ञानं क्षणिकमभ्युपगच्छेयुः उपरितनेति द्वितीयक्षणोत्पत्तिशीलस्य तस्य विनष्टस्य ज्ञानस्य धर्मस्तद्धर्म्मस्तस्य भावस्तत्त्वम् तस्येति अर्थप्राकट्यस्य तद्धर्म्मत्वेति ज्ञानधर्म्मत्वेविरोधात् तथात्वइति अर्थधर्मत्वे अथयस्येत्यादि असाविति अर्थप्राकट्यरूपोऽर्थधर्मः कथमिति अर्थदर्शनं तज्जनकमिति प्राकट्यजनकं यतः कारणानुमानेन कार्यंकार्यानुमानतः कारणमनुमीयते ज्ञानं तावद् ज्ञानरूपोत्पादकमेव जाघट्टि नजडजनकं विरोधप्रतिबन्धात् स्वात्मनीति तस्याइति स्ववित्तेः अस्येति अर्थधर्म्मस्य तथाहीत्यादि अय-मिति अर्थधर्म्मः तत्प्रतीतीति पदार्थप्रतीतिप्रसङ्गात् तदपेक्षेति तस्याक्षव्या-पारस्यापेक्षातयाऽनुत्पादात् तद्वेदनमिति क्षणिकस्यार्थप्राकट्यस्य ज्ञानम्।

(पं०)—यतउत्पत्तिर्ज्ञप्तिर्वास्वात्मनि विरुध्यतइति क्रियाविरोधादिति इत्युक्तमत-स्तामेवोपजीव्यचर्चयति । तथाप्रदीपः स्वंप्रकाशयतीत्ययमपि तथाप्रथतएवेति तथाकर्म तया, तस्य तद्धर्मत्वविरोधादिति तस्य अर्थप्राकट्यस्य । तस्य विनष्टस्य ज्ञानस्यधर्मस्तद्धर्मस्तद्भावस्तस्मात्।

(रत्ना) अथ यौगाः सङ्गिरन्ते । अहो आर्हता नास्मिन्मीमांसके वराके व्यपाकृतेपि संवेदने स्वसंवेदनदोहदः पूरयितुंपार्यते तथाहि ज्ञानं स्वान्यप्रकाश्यमीश्वरज्ञानान्यत्वे सति प्रमेयत्वाद्यदेवं तदेवं यथा घट-स्तथाचेदन्तस्मात्तथा समुत्पन्नं हि ज्ञानमेकात्मसमवेतान्तरसमयसमुत्प-द्दिष्णुमानसप्रत्यक्षेणैव लक्ष्यते न पुनः स्वेन नचैवमनवस्थावल्लीकल्लासः।

अर्थावसायिवेदनोत्पादमात्रेणैवार्थसिद्धेस्ताद्धि पदार्थपरामर्शस्वभावमेवेत्युत्पन्नमात्रमेव पदार्थप्रथामनोरथरथस्थितं कृतार्थयति प्रमातारं अर्थज्ञानजिज्ञासायां तु तत्रापि ज्ञानमुत्पद्यत एवेति तदेतदेतेषां मतेस्तरलतां तनोति। प्रकटितप्रयोगेपक्षस्यानुमानेन मानखण्डनात्तथाच ताव. काकूतेन तत्रहेतोः कालात्ययापदिष्टत्वनिष्टङ्कनाच्च तथाहिविवादास्पदं ज्ञानं स्वसंविदितं ज्ञानत्वादीश्वरज्ञानवत् वाद्यसिद्धमेतन्निदर्शनं जैनैरीश्वरास्वीकारेण तज्ज्ञानस्यतेषामप्रसिद्धेरितिचेत्तदचतुरस्त्रमनवद्यविद्याविद्याधरीबन्धुरपरिष्वङ्गस्य पुरुषातिशेषविशेषस्य खण्डपरशोःस्वीकारात् त्रिविष्टपघटनलंपटपटिम्नः सकलावलोकनकौशलशालिन एवचास्यातिरस्कारात् व्यर्थविशेष्यश्चात्रहेतुः समर्थविशेषणोपादानेनैव साध्यसिद्धे धूमध्वजसिद्धौ धूमवत्त्वेसति द्रव्यत्वादितिवत् नहीश्वरज्ञानादन्यत् स्वसंविदितमप्रमेयं चास्ति यदपोहाय प्रमेयत्वादिति क्रियेत अप्रयोजकश्चायं हेतुः सोपाधिकत्वात् साधनाव्यापकः साध्येनसमव्याप्तिकः खलूपाधिरभिधीयते तत्पुत्रत्वादिना श्यामत्वे साध्ये शाकाद्याहारपरिणामवत्। कःपुनरुपाधिरत्रसूक्ष्मेक्षणैरीक्षाञ्चक्रेइति चेदुच्यते निविडजडिमनूजडिमलक्षणः। तथाहीश्वरज्ञानान्यत्वे प्रमेयत्वे सत्यपि यदेवजडिमपात्रं पात्रादि तदेव स्वस्मादन्येनैव प्रकाश्यते। स्वप्रकाशेपरमुखोत्प्रेक्षित्वं हि जडस्य लक्षणं नच ज्ञानं जडस्वरूपमिति सिद्धं साधनाव्यापकत्वं जाड्यस्य साध्येन समव्याप्तिकत्वं चास्य स्पष्टमेव। जाड्यं विहाय स्वप्रकाशाभावस्य तत्र त्यक्त्वा जाड्यस्य क्वचिदप्यदर्शनादिति।

(टि०)–अर्थावसायीत्यादिअर्थसिद्धेरिति नहिपूर्वज्ञानं जातमेव अकार्यसाधकं सदपि प्रमाणमिति वयं मन्यामहे किन्तुकार्यसाधकमेव प्रमाणं तद्धीति अर्थावसायिवेदनं तत्रापीति एकात्मसमवेतज्ञाने पूर्वज्ञानं मे घटाकारमुत्पन्नमिति ज्ञानं ज्ञानान्तरेण वेद्यते नतुस्वेनैव तज्ज्ञानस्येति ईश्वरवेदनस्य तेषामिति जैनानां अस्येतीश्वरस्य तत्पुत्रत्वादिनेत्यादि सश्यामस्तत्पुत्रत्वात्दृश्यमानतादितरपुत्रवत् अत्रसाधने शाकाद्याहारपरि-

णामलक्षणस्य उपाधेः प्रवेशप्रबन्धः सुदुःप्रतिषेधः स्यात् साध्यं श्यामत्वं व्यासं तेन तमन्तरेण श्यामत्वासम्भवात् तत्पुत्रत्वन्तु साधनं नव्यासं यत्तत्तनयाअपरेगौरकायाअपि प्रेक्ष्यन्ते कःपुनरित्यादि अत्रेति ईश्वरज्ञानान्यत्वे सतिप्रमेयत्वादित्येवं रूपे अस्येति उपाधेः शाकाद्याहारपरिणाम उपाधिः नहियेयेतत्पुत्रास्तेषांसर्वेषामपि शाकाद्याहारपरिणाम इति साधनाव्यापकः यत्रयत्रश्यामत्वंतत्रतत्र शाकाद्याहारपरिणामः यत्रयत्र शाकाद्याहारपरिणामस्तत्र तत्रश्यामत्वमिति साध्येन समव्याप्तिकः तमिति स्वप्रकाशाभावं तदुत्पादेति संवेदनोत्पत्तिप्रतीतेः।

(पं०)—नचैवमनवस्थावल्लेरुल्लास इति यथाकिलार्थज्ञानं मानसप्रत्यक्षेण ज्ञातमेवं तदप्यन्येन तदप्यन्येनेत्यनवस्था। पदार्थप्रथामनोरथस्थितमिति प्रथाशब्देन प्रकाशनम्। अनुमानेनेति प्रत्यनुमानेन। तथाचेति प्रत्यनुमानं बाधितत्वे. तत्रेति प्रकटितप्रयोगे। तज्ज्ञानस्येति ईश्वरज्ञानस्य। अनवद्यविद्याविद्याधरीत्यादि गद्यं विद्याशब्देनात्र केवलज्ञानं नपुनर्गिरिजतनयाश्लेषविश्लेषलालसस्य, व्यर्थविशेष्यइति प्रमेयत्वादित्ययं हेतुः। अन्यत्रसंविदितमप्रमेयमिति भवन्मते सर्वस्यापि ज्ञानस्य प्रमेयत्वात्। साधनाव्यापकः साध्येनसमव्याप्तिकः खलूपाधिरभिधीयते इति यथातत्पुत्रत्वादिना श्यामत्वेसाध्ये शाकाद्याहारपरिणामउपाधिः। नहि ये ये तत्पुत्रास्तेषां सर्वेषामपि शाकाद्याहारपरिणामः यत्रयत्र शाकाद्याहारपरिणामः। तत्पुत्रत्वमपि भविष्यति केषाञ्चिच्छाकाद्याहारपरिणामश्च नभविष्यति इति साधनाव्यापकः येये श्यामास्तेषां तेषां शाकाद्याहारपरिणामः यत्रयत्र श्यामत्वं तत्रतत्र शाकाद्याहरपरिणामः यत्रयत्र शाकाद्याहारपरिणामस्तत्रतत्र श्यामत्वमिति साध्येन समव्याप्तिकः।

(रत्ना०)—यच्चोक्तं समुत्पन्नं हि ज्ञानमेकात्मसमवेतेत्यादि तदपि नावितथमित्थमर्थज्ञानतज्ज्ञानयोरुत्पद्यमनयोः क्रमानुपलक्षणात्। आशूत्पादादत्र क्रमानुपलक्षणमुत्पलपत्रशतव्यतिभेदवदिति चेत्तदचारु जिज्ञासाव्यवहितस्यार्थज्ञानज्ञानस्योत्पादप्रतिपादनात् नच जिज्ञासासमुत्पाद्यत्वं संवेदनानां सङ्गच्छते। अजिज्ञासितेष्वपि योग्यदेशेषु गोचरेषु तदुत्पादप्रतीतेर्नचायोग्यदेशमर्थज्ञानमात्मसमवेतस्यास्य समुत्पादादिति जिज्ञासामन्तरेणैवार्थज्ञाने ज्ञानोत्पादप्रसङ्गः। बाढमुत्पद्यतां नामेदं कोदोषइतिचेत् नन्वेवमेव तज्ज्ञानज्ञानेप्यपरज्ञानोत्पाद-

प्रसङ्गः । तत्रापि चैवमैत्रायमित्यपरापरज्ञानोत्पादपरम्परायामेवात्मनो व्यापारान्नविषयान्तरसञ्चारः स्यादिति न ज्ञानस्य ज्ञानान्तरज्ञेयतापि युक्तिमार्गमवगाहते ।

(टि०)-नचायोग्येति न विद्यते योग्योदेशोऽस्य तत् अस्येति ज्ञानस्य ज्ञानस्येत्यादि प्रमेयमव्यभिचारि यत्र तत्तस्यभावः अनभ्यासदशायामित्यादि तदिति सम्वादकबाधकज्ञानम् ।

प्रमाणं विवेच्यास्यैव प्रामाण्यस्वरूपंधर्म्ममाविष्कुर्वन्ति ।

**मू०-ज्ञानस्य प्रमेयाव्यभिचारित्वं प्रामाण्यमिति ।**

(रत्ना०)-प्रमीयमाणार्थाव्यभिचरणशीलत्वं यज्ज्ञानस्य तत्प्रामाण्यमित्यर्थः ।

प्रसङ्गायातमप्रामाण्यरूपमपि धर्म्मं प्रकटयन्ति ।

**मू०-तदितरत्त्वप्रामाण्यमिति ।**

(रत्ना०)-तस्मात्प्रमेयाव्यभिचारित्त्वादितरत्प्रमेयव्यभिचारित्वमप्रामाण्यं प्रत्येयं । प्रमेयव्याभिचारित्वं च ज्ञानस्य स्वव्यतिरिक्तग्राह्यापेक्षयैव लक्षणीयं स्वस्मिन्व्यभिचारस्यासम्भवात् तेन सर्वं ज्ञानं स्वापेक्षया प्रमाणमेव न प्रमाणाभासं बहिरर्थापेक्षयातु किञ्चित् प्रमाणं किञ्चित्प्रमाणाभासम् ।

(पं०)—स्वस्मिन् व्यभिचारस्यासम्भवादिति संशयविपर्ययादीनामपि स्वविषये प्रमाणत्वात् ।

अथोत्पत्तौ स्वनिश्चये च ज्ञानानां स्वतएव प्रामाण्यमप्रामाण्यन्तु परतएव यज्जैमिनीयाजगुस्तन्निराकुर्वन्ति ।

**मू०-तदुभयमुत्पत्तौ परतएव ज्ञप्तौतु स्वतः परतश्चेति ।**

(रत्ना०) अत्र ल्यप्लोपे पञ्चमी परं स्वं चापेक्ष्येत्यर्थः । ज्ञानस्याहि प्रामाण्यमप्रामाण्यं च द्वितयमपि ज्ञानकारणगतगुणदोषरूपं परमपेक्ष्योत्पद्यते । निश्चीयते त्वभ्यासदशायां स्वतो ऽनभ्यासदशायां तु परत इति । तत्र ज्ञानस्याभ्यासदशायां प्रमेयाव्यभिचारि तदितरच्चास्मीति प्रामाण्याप्रामाण्यनिश्चयः । सम्वादकबाधकज्ञानमनपेक्ष्य प्रादुर्भवन् स्वतोभवतीत्यभिधीयते । अनभ्यासदशायान्तु तदपेक्ष्य जायमानोऽसौ परतइति ।

अत्रैवं मीमांसका मीमांसामांसलतां दर्शयन्ति । स्वतएव सर्व्वथाप्रमाणानां प्रामाण्यं प्रतीतिकोटिमाटीकते तथाहि तदुत्पत्ति-प्रगुणागुणाः प्रत्यक्षेणानुमानेन वा मीयेरन् । यदिप्रत्यक्षेण तत्किमैन्द्रिये-णातीन्द्रियेण वा । नैन्द्रियेणातीन्द्रियेन्द्रियाधिकरणत्वेन तेषां तद्ग्रहणा-योग्यत्वात् । नाप्यतीन्द्रियेण तस्यचारुविचारगोचरचारिष्णुत्वाभावात् । अनुमानेन तान्निरणैष्महीति चेत्कुतस्तत्रनियमनिर्णयः स्यान्नप्रत्यक्षाद्-गुणेषु तत्प्रवृत्तेः परास्तत्त्वात् तथाच द्विष्ठसम्बन्धसंवित्तिर्नैकरूपप्रवेदनात् द्वयस्वरूपग्रहणे सति सम्बन्धवेदनम् । नाप्यनुमानात् ततएवतन्निश्चित्ता-वितरेतराश्रयस्य तदन्तरात्पुनरनवस्थायाः प्रसक्तेः । ततोनगुणाःसन्ति-केचिदिति स्वरूपावस्थेभ्य एवकारणेभ्यो जायमानं तत्कथमुत्पत्तौ परतः स्यात् निश्चयस्तु तस्य परतः कारणगुणज्ञानाद्बाधकाभावज्ञानात् सम्वादिवेदनाद्वा स्यात् तत्र प्राच्यं प्रकारं प्रागेव प्रास्थामगुणग्रहणप्रवीण-प्रमाणपराकरणात् द्वितीयेतु तात्कालिकस्य कालान्तरभाविनो वा बाध-कस्याभावज्ञानं तन्निश्चायकं स्यात्पौरस्त्यं तावत्कूटहाटकनिष्टङ्कनेपि स्पष्टमस्त्येव द्वितीयन्तु नचर्म्मचक्षुषां सम्भवति । संवादिवेदनन्तु सह-कारिरूपं सत् तन्निश्चयं विरचयेद्ग्राहकं वा । नाद्यभिद्भिन्नका-लत्वेन तस्य सहकारित्वासम्भवात् द्वितीयपक्षेतु तस्यैवग्राहकत्वाद्विषयस्य विषयान्तरस्य वा । न प्रथमः पक्षः प्रवर्त्तकज्ञानस्य सुदूरनष्टत्वेन ग्राह्य-त्वायोगात् । द्वितीयेत्वेकसन्तानं भिन्नसन्तानं वा तत्स्यात्पक्षद्वयेपि तै-

मिरिकावलोक्यमानमृगाङ्कमण्डलद्वयदर्शिदर्शनेन व्यभिचारस्ताद्धिचैत्रस्य पुनः पुनर्मैत्रस्यचोत्पद्यतएव । तृतीये पुनरर्थक्रियाज्ञानमन्यद्वा तद्भवेत् न पौरस्त्यं प्रवर्त्तकस्य प्रामाण्यानिश्चये प्रवृत्त्यभावेनार्थक्रियायाएवाभावात् । निश्चितप्रामाण्यात्तुप्रवर्त्तकज्ञानात् प्रवृत्तौ चक्रकम् । निश्चितप्रामाण्यात् प्रवर्त्तकात्प्रवृत्तिः । प्रवृत्तेरर्थक्रियाज्ञानं तस्माच्च प्रवर्त्तकज्ञानस्य प्रामाण्यनिश्चयइति । कथं चार्थक्रियाज्ञानस्यापि प्रामाण्यनिश्चयोऽन्यस्मादर्थक्रियाज्ञानाच्चेदनवस्था । प्रवर्त्तकज्ञानाच्चेदन्योन्याश्रयः स्वतश्चेत्प्रवर्त्तकज्ञानस्यापि तथैवास्तु । अन्यदपिविज्ञानमेकसन्तानं भिन्नसन्तानं वा । द्वयमपिचैतदेकजातीयं भिन्नजातीयं वा । चतुष्टयमपि चैतद्व्यभिचाराभिचारदुस्सञ्चरं । तथाह्येकसन्तानं भिन्नसन्तानं चैकजातीयमपि तरलतरतुङ्गतरङ्गतरङ्गिणीतोयज्ञानं भिन्नजातीयञ्च कुम्भाम्भोरुहादिज्ञानं मरुवसुन्धराचारिचतुरतरतरणिकिरणश्रेणिसङ्गिसलिलसंवेदनस्य न संवादकमिति न ज्ञप्तावपि तत्परतः अप्रामाण्यन्तूत्पत्तौ दोषापेक्षत्वात् । ज्ञप्तौतु बाधकापेक्षत्वात् परतएवेति ।

(टि०) असाविति प्रामाण्याप्रामाण्यनिश्चयः सर्वथेति उत्पत्तौज्ञप्तौच तदुत्पत्तीति प्रामाण्योत्पादप्रवणा अतीन्द्रियेति अतीन्द्रियमिन्द्रियगोचरातीतमिन्द्रियमाभ्यन्तरं निवृत्तिरूपमधिकरणमाधारो येषां तद्भावस्तत्त्वं । तेषामिति गुणानां तद्ग्रहणेति तेनैन्द्रियेण ज्ञानाऽसम्भवात् तस्यचार्थेति अतीन्द्रियप्रत्यक्षस्य अतीन्द्रियप्रत्यक्षासिद्धौ हि सर्वज्ञः सिध्यति नचामी तं मन्यन्ते अनुमानेन तानिति गुणान् निरणेष्महीति निश्चयपूर्वमन्यामहे तत्रेति तेषु गुणेषु नियमनिर्णयइति अनुमानाविनाभावनिश्चयः तत्प्रवृत्तेरिति प्रत्यक्षप्रवृत्तेः परास्तत्वादिति अपाकृतत्वात् द्विष्ठसम्बन्धेति द्वयोः स्वरूपग्रहणेसति सम्बन्धवेदनं ततएवेति गुणसाधकादेवानुमानात् तन्निश्चिताविति अविनाभावसम्बन्धनिश्चितौ इतरेतराश्रयस्य प्रसक्तिः तदन्तरादिति अनुमानान्तरात् तन्निश्चितौ तन्निश्चयस्त्वित्यादि तस्येति

१ "चारि" इत्यपि पाठान्तरम् ।

प्रामाण्यस्य प्रास्थामेति क्षिप्तवन्तः तन्निश्चायकमिति प्रामाण्यनिर्णायकं भिन्नकालत्वेन तस्येति संवादकज्ञानस्य तस्यैवेति प्रामाण्यस्य तद्विषयस्येति प्रामाण्यविषयस्य प्रवर्त्तकेति संवादकज्ञानस्य तदिति संवादि वेदनम् पक्षद्वयेपीति तिमिररोगाभिभूतनयनो जनः चन्द्रमण्डलद्वितयं पुनःपुनः पश्यति प्रथमालोकितशशियुगलस्य संवादकं पुनः २ विधुवीक्षणं भवे त्तथापि तद्ज्ञानं संवाददत्तहस्तावलम्बमपि नप्राज्ञप्रवृत्तिप्रतिपत्तिनिमित्तं विमलनयनजनविलोकनेन व्यभिचारात् । तस्यप्रामाण्यगोचराभावात् तद्धीति ननुएकपुरुषप्रतिष्ठं शशिद्वयावलोकनमप्रमाणं भवतु पुनर्घनजननयनगोचरीभूतं तत्कथमप्रमाणं स्यात् मैवं यएकत्रदोषः सर्वत्रापिसएव अन्यदपीति विषयान्तरसम्बन्धि किंननैर्मल्यादीनिति उत्तरयन्तिसूरयः ।

(पं०)—मीमांसामांसलतामिति मीमांसाग्रन्थविशेषः । स्वतएव सर्वथा प्रमाणानामिति उत्पत्तौ ज्ञप्तौ च तदिति प्रामाण्यम् तेषामिति गुणानां तद्ग्रहणायोग्यत्वादिति इन्द्रियग्रहणायोग्यत्वात् । तत्रेति अनुमाने, नियमनिर्णयइति प्रतिबन्धनिर्णयः । नप्रत्यक्षादिति धूमधूमध्वजयोर्ह्यविनाभावं प्रत्यक्षान्निश्चिन्वन्तिक्वातिनः इहच न प्रत्यक्षात् तत्प्रवृत्तेरिति प्रत्यक्षप्रवृत्तेः । द्विष्ठसम्बन्धसंवित्तिरिति इन्द्रियाणां गुणिनां परिज्ञानेपि गुणानामपरिज्ञानात् । द्विष्ठसम्बन्धइत्यादि पूर्वार्द्धं ग्रन्थेऽस्ति अपरार्द्धन्तु द्वयस्वरूपग्रहणेसति सम्बन्धवेदनम् ॥ १ ॥ ततएवेति गुणनिर्णायकानुमानादेव तदन्तरादिति अनुमानान्तरात् तत्कथमिति तत्प्रामाण्यम् तन्निश्चयं विरचयेदिति अर्थज्ञानानिश्चयं प्रामाण्यमित्यर्थः । तस्यैवग्राहकं सदिति तस्यैव ग्राहकंसत् तन्निश्चयंविरचयेदिति योगः तद्धीति तैमिरिकावलोक्यमानमृगाङ्कमण्डलद्वयवर्शिदर्शनम् । चैत्रस्य पुनः पुनर्मैत्रस्यचोत्पद्यतएवेति तस्यैव तैमिरिकस्य चैत्राख्यस्य पुनः पुनर्दर्शनं सम्वादज्ञानमेकसन्तानं मैत्रस्यापि द्विचन्द्रदर्शने भिन्नसन्तानम् । तद्वत्विसम्वादिज्ञानेन तद्विषयग्रहणमात्रेणैव प्रामाण्यनिश्चयः सोऽत्रापि प्रसज्येत तद्वदेदिति विषयान्तरग्राहकं भवेत् । अर्थक्रियाज्ञानस्यापि प्रामाण्यनिश्चयइति प्रवर्त्तकज्ञानस्य तावदर्थक्रियाज्ञानात् प्रामाण्यनिश्चयः।

(रत्ना०) अत्राभिदध्महे । यत्तावद्गुणाः प्रत्यक्षेणानुमानेन वा मीयेरन्नित्यादिन्यगादि तदखिलं नखलु नदोषप्रसरेपि प्रेरयितुं पार्यते

अथाध्यक्षेणैव चक्षुरादिस्थान् दोषान्निश्चिकिरेलोकाः । किन्न नैर्म्मल्यादीन् गुणानपि । अथतिमिरादिदोषाभावमात्रमेव नैर्म्मल्यादिनतुगुणरूपमिति कथमध्यक्षेण गुणनिश्चयः स्यादेवं तर्हि नैर्म्मल्यादिगुणाभावमात्रमेव तिमिरादि नतुदोषरूपमितिविपर्ययकल्पना किं न स्यात् अस्तुवादोषाभावमात्रमेव गुणस्तथापि नायं तुच्छः कश्चित्सङ्गच्छते भावान्तरविनिर्मुक्तोभावोऽत्रानुपलम्भवत् । अभावः सम्मतस्तस्य हेतोः किंनसमुद्भवइति स्वयंभट्टेन प्रकटनात् तदपेक्षायामपि च कथं न परतः प्रामाण्योत्पत्तिः । अथासतां नैर्मल्यादयो गुणास्तथाप्यधिष्ठानप्रतिष्ठानेव तान् प्रत्यक्षंसाक्षात्करोति नकरणस्थांस्तेषां परोक्षत्वात्तर्हि तत एव दोषानपि तत्स्थानेवतत्साक्षान्कुर्यादितिकथंदोषाअपि प्रत्यक्षलक्ष्याः स्युः अथाप्रामाण्यं विज्ञानमात्रोत्पादककारणकलापातिरिक्तकारकोत्पाद्यं विज्ञानमात्रानुवृत्तावपि व्यावर्त्तमानत्वात् तदनुवृत्तावपि यद्व्यावर्त्तते तत्तन्मात्रोत्पादककारणकलापातिरिक्तकारकोत्पाद्यं यथापाथः पृथिवीपवनातपानुवृत्तावपि व्यावर्त्तमानः कोद्रवाङ्कुरस्तदतिरिक्तकोद्रवोत्पाद्यइत्यनुमानाद्दोषप्रसिद्धिरिति चेच्चिरंनन्दताद्भवानिदमेव ह्यनुमानमप्रामाण्यपदं निरस्य प्रामाण्यपदञ्च प्रक्षिप्यगुणसिद्धावपि विदध्यादिति कथं न दोषवद्गुणा अपिसिद्ध्येयुः । यतो नोत्पत्तौ परतः प्रामाण्यं स्यात् प्रतिबन्धश्च यथादोषानुमाने तथागुणानुमानेपि निर्णयः कथंवादित्यगत्यनुमाने तन्निर्णयः। दृष्टान्तेतु यथाऽत्र साध्यसाधनसम्बन्धोद्बोधोऽस्ति तथागुणानुमानेपि

(टि०)-तथापीति अयमिति गुणः तुच्छइति अभावरूपः भावान्तरेत्यादि भावान्तरेण विवक्षितघटादिना रहितोभावोभूतलादिः यथाघटाभावोभूतलं तत्रभूतलम्भावरूपमस्त्येव अपरेपिभावाः सन्ति किन्तु विवक्षितोघटएवनास्ति अनुपलम्भेति यथात्रभूतलेघटस्यानुपलम्भस्तथाभावोपि तदपेक्षायामिति दोषाभावापेक्षायाम् तेषामिति गुणानां तत्स्थानेवेति अधिष्ठानप्रतिष्ठान् तदिति प्रत्यक्षम् तदनुवृत्ताविति विज्ञानानुवृत्तावपि प्रतिबन्धइति अविनाभावः तन्निर्णयेति अविनाभावनिश्चयः ।

(पं०)-तस्यैवतुकथमित्याह अभावः सम्मतः इत्यतोऽग्रे तस्यहेतोः किन्नसमुद्भवः

(रत्ना०) यच्चावाचि निश्चयस्तु तस्य परतइत्यादि तत्र संवादिवेदनादिति ब्रूमः कारणगुणज्ञानबाधकाभावज्ञानयोरपि च संवादकज्ञानरूपत्वं प्रतिपद्यामहे। यादृशोऽर्थः पूर्वज्ञाने प्रथापथमवतीर्णस्तादृशएवासौ येन विज्ञानेन व्यवस्थाप्यते तत्सम्वादकमित्येतावन्मात्रं हि तल्लक्षणमाचचक्षिरे धीराः। यस्तु गुणग्रहणप्रवणप्रमाणपराकरणपरायणातिदेशप्रयासः प्रयास एवकेवलमयमजनि भवतः दोषसन्दोहवद्गुणगणेपि प्रमाणप्रवृत्तेरनिवारणात्।

यत्तुबाधकाभावज्ञानपक्षे विकल्पितं तात्कालिकस्य कालान्तरभाविनो वेत्यादि। तत्राद्यविकल्पपरिकल्पनाल्पीयसी। नखलुसाधननिर्भासिसंवेदनोदयकाले क्वापि कस्यापि बाधकस्योदयः सम्भवी। उपयोगयौगपद्यासम्भवात्। भविष्यत्कालस्यतु बाधकस्याभावज्ञानात् प्रामाण्यनिर्णयो निरवद्य एव न च चर्म्मचक्षुषां तदभावो भवितुमर्हति यदुदग्रसमग्रसामग्री सम्पाद्य संवेदनं न तत्र भाविबाधकावकाशइत्येवन्तन्निर्णयात्। यदिचभाविवस्तुसंवेदनमस्मादृशां नस्यादेवतदा कथं कृत्तिकोदयाच्छकटादयानुमानंनास्तमियात्।

(टि०) नखलुसाधनेति कारणावभासि यदुदग्रेत्यादि तत्रेति संवेदने तन्निर्णयादिति प्रामाण्यनिश्चयात्।

(रत्ना०) यत्पुनरवादि संवादिवेदनंत्वित्यादि तत्र संवादिवेदनात् साधननिर्भासिप्रतिभासविषयस्य विषयान्तरस्य वा ग्राहकात् प्रामाण्यनिर्णयःइति ब्रूमः। भवतिहि तिमिरनिकुरुम्बकरम्बितालोकसहकारिकुम्भावभासस्य तत्रैवैकसन्तानं भिन्नसन्तानं च निरन्तरालोकसहकारिसामर्थ्यसमुद्भूतं संवेदनं संवादकं। न च तैमिरिकादिवेदनेपि तत्प्रसङ्गस्तत्रपरतोबाधकात् स्वतःसिद्धप्रामाण्यादुत्तरस्याप्रामाण्यानिर्णयात् विषयान्तरग्राहकमपि संवादकमेव यथाऽर्थक्रियाज्ञानं न चात्र चक्रकावकाशः प्रवर्त्तकप्रामाणप्रामाण्यनिर्णयादिप्रयोजनायाः प्रथमप्रवृत्तेः संशयादपि

भावात्। अर्थक्रियाज्ञानस्य तु स्वतएवप्रामाण्यनिश्चयोऽभ्यासदशापन्नत्वेन दृढतरस्यैवास्योत्पादात् । न च साधननिर्भासिनोपि तथैवायमस्त्विति वाच्यं तस्य तद्विलक्षणत्वात् । अन्यदप्येकसन्तानं भिन्नसन्तानं चैक जातीयं च यथैकदस्त्रदर्शनं दस्रान्तरदर्शनस्य भिन्नजातीयं च यथा निशीथे तथाविधरसास्वादनं तथाभूतरूपस्य संवादकम्भवत्येव। न च मिथ्या-पाथः प्रथायाः पाथोन्तरे कुम्भादौ वा संवेदनं संवादकं प्रसज्यते । यतो न खलुनिखिलं प्रागुक्तं संवेदनं संवादकं सङ्गिरामहे किन्तर्हि यत्र पूर्वो-त्तरज्ञानगोचरयोरव्यभिचारस्तत्रैव । किंचस्वत एव प्रामाण्यनिर्णयवर्णन-सकर्णेनानेन स्वशब्द आत्मार्थआत्मीयार्थो वा कथ्येत । नाद्यः पक्षः स्वावबोधविधानेप्यन्धयाबुध्या स्वधर्म्मस्य प्रामाण्यस्य निर्णेतुमशक्तेः द्वितीये तु प्रकटकपटनाटकघटनपाटवं प्राचीकटत् । प्रकारान्तरेणा-स्मन्मताश्रयणात् । अस्माभिरप्यात्मीयेनैव ग्राहकेण प्रामाण्यनिर्णयस्य स्वीकृतत्वात् । अथ येनैव ज्ञानमात्रं निर्णीयते तेनैव तत्प्रामाण्यमपीति स्वतः प्रामाण्यनिर्णयो वर्ण्यते नन्वर्थप्राकट्योत्थापितार्थापत्तेः सकाशा-त्त्वया ज्ञाननिर्णीतिस्तावदभीप्सामासे । अर्थप्राकट्यञ्च यथार्थत्वविशेषण-विशिष्टं निर्विशेषणं वा ऽर्थापत्तिमुत्थापयेत् । प्राचिपक्षे तस्य तद्विशेषणग्रहणं प्रथमप्रमाणादन्यस्मात्स्वतो वा भवेत् प्रथमपक्षे परस्पराश्रयप्रसङ्गः निश्चित-प्रामाण्याद्धिप्रथमप्रमाणाद्यथार्थत्वविशिष्टार्थप्राकट्यग्रहणं तस्माच्च प्रथम-प्रमाणे प्रामाण्यनिर्णयइति । द्वितीयविकल्पे त्वनवस्था । अन्यस्मिन्नपि हिप्रमाणे प्रामाण्यनिर्णायकार्थापत्त्युत्थापकस्यार्थप्राकट्यस्य यथार्थत्ववि-शेषणग्रहणमन्यस्मात्प्रमाणादिति । अथस्वतस्तद्विशेषणग्रहणं तथाहि स्वसंविदितमर्थप्राकट्यं तच्चात्मानं निर्णयमानं स्वधर्म्मभूतं यथार्थत्वमपि निर्णयते । तथाच ततोऽनुमीयमाने ज्ञाने स्वतः प्रामाण्यज्ञप्तिरिति तद-तदनवदातमेवंसत्यप्रामाण्यस्यापि स्वतोज्ञप्तिप्रसक्तेः । स्वतोनिश्चितवै-तथ्यविशेषणादर्थप्राकट्याद्धिज्ञानमनुमीयमानमास्कन्दिताप्रामाण्यमेवा-

१ प्रामाण्यमपि इत्यपिपाठान्तरम् ।

नुमीयते। ततः कथं प्रामाण्यवदप्रामाण्यस्यापि स्वतो निर्णीतिर्न स्यात्। अथ तत्र बाधकादेवाप्रामाण्यनिर्णयो नपुनर्ज्ञाननिर्णायकादेवं तर्हिसंवादकादेव प्रामाण्यस्यापि निर्णयोऽस्त्विति तदपिकथं स्वतोनिर्णीतं स्यात्। निर्विशेषणंचेत्तदर्थप्राकट्यमर्थापत्त्युत्थापकं तर्ह्यप्रामाणेपि प्रामाण्यनिर्णायकार्थापत्त्युत्थापनापत्तिरर्थप्राकट्यमात्रस्य तत्रापि सद्भावादिति सूत्रोक्तैव व्यवस्थासिद्धिसौधमध्यमध्यरुक्षत्।

इतिप्रामाणनयतत्त्वालोकेश्रीरत्नप्रभाचार्यविरचितायां रत्नाकरावतारिकाख्यलघुटीकायां प्रमाणस्वरूपनिर्णयोनाम प्रथमः परिच्छेदः।

(टि०)-भवतीत्यादि तत्रैवेति प्रदेशे स्वल्पालोकस्य संपूर्णालोकः संवादकः स्यात् उभयोरप्येकत्रप्रवृत्तेः तत्प्रसङ्गइति संवादकत्वप्रसङ्गः। अर्थक्रियेत्यादि अस्येति अर्थक्रियाज्ञानस्य साधननिर्भासिनइति प्रवर्त्तकज्ञानस्य तथैवेति अभ्यासदशापन्नत्वेनैव अयमिति प्रामाण्यनिश्चयः तस्येति प्रवर्त्तकज्ञानस्य तद्विलक्षणेति अर्थक्रियाज्ञानविपरीतत्वात् अन्यदप्येकेत्यादि भिन्नजातीयमिति रूपाद्रसोभिन्नजातीयः अथस्वतइत्यादि तच्चेति अर्थप्राकट्यम् ततइति अर्थप्राकट्यात्॥

इति श्रीसाधुपूर्णिमागच्छीयश्रीमदाचार्यगुणचन्द्रसूरिशिष्य पं०-ज्ञानचन्द्रविरचिते रत्नाकरावतारिकाटिप्पणकेप्रथमः परिच्छेदः समाप्तः॥

(पं०)—तत्प्रसङ्गइति सम्वादकत्वप्रसङ्गः। तत्रपरतोबाधकादिति निर्मलचक्षुराप्तपुरुषदर्शनप्राक्कालानुभूतचन्द्रैक्यस्मरणाद्वा। पाथाऽन्तरे इति तरङ्गिणीतोयज्ञाने निर्णीति न स्यादित्यतोऽग्रे येन तत्परतः कल्प्यते इति गम्यम्। अप्रमाणेपीति द्विचन्द्रज्ञाने मृगतृष्णाजलज्ञाने वा॥

समाप्तः प्रथमः परिच्छेदः।

---

अत्र वादस्थलानि। शब्दार्थयोः सम्बन्धनिराकरणं तद्व्यस्थापनं च१। परोक्षप्रमाणलक्षणनिराकरणम् २। स्वप्रमाणलक्षणकण्टकोद्धारः ३। सन्निकर्षप्रामाण्यनिराकरणम् ४। निर्विकल्पकनिराकरणम् ५। प्रभाकराभिमतविवेकाख्यातिनिराकरणं विपर्यये ६। शून्यवादनिराकरणम् तत्रैवावयविवादनिराकरणम् ७। ब्रह्माद्वैतवादिनिराकरणम् ८। त्रिपुटीप्रत्यक्षवादिभट्टनिरासेन ज्ञानस्य स्वसंवेद्यत्वनियमनम् ९। यौगाभिप्रेतस्य ज्ञानान्तरवेद्यज्ञानस्य निराकरणम् १०। जैमिनीयाभिमतं यत् ज्ञानस्यस्वतएव प्रामाण्यं परतएवत्वप्रामाण्यं तस्यनिराकरणं यच्चस्वमते प्रामाण्यमप्रामाण्यं चोत्पत्तौ परतएव ज्ञप्तौतुस्वतः परतश्चेति तस्यस्थापनं एवमेकादश।

अर्हम्

द्वितीयो परिच्छेदः ।

एवं प्रमाणस्य स्वरूपंप्रतिपाद्य संख्यां समाख्यान्ति ।

# मू०-तद्द्विभेदं प्रत्यक्षं च परोक्षं चेति ।

(रत्ना०)-अक्षमिन्द्रियं प्रतिगतमिन्द्रियाधीनतया यदुत्पद्यते तत्प्रत्यक्षमिति तत्पुरुषः । नन्वाक्षिशब्दादपि प्रतिपूर्वात् प्रतिसमनुभ्योक्ष्ण इत्यव्ययीभावसमासान्ते टचिप्रत्यक्षमिति सिद्ध्यति तत्किन्न कक्षीचक्रिरांसः नचैवं स्पर्शनादिप्रत्यक्षं नैतच्छब्दवाच्यं स्यादिति वाच्यं। तत्प्रवृत्तिनिमित्तस्य स्पष्टत्वस्य तत्रापिभावेन तच्छब्दवाच्यतोपपत्तेः । व्युत्पत्तिनिमित्तमात्रतया ह्यत्राक्षिशब्दः शब्द्यते कथमन्यथा ऽक्षशब्दोपादानेप्यनिन्द्रियप्रत्यक्षस्य तच्छब्दवाच्यता चतुरस्रा स्यात् ।



(टि०)-नन्वाक्षिशब्दादित्यादि तदिति प्रत्यक्षम् किन्नकक्षीति कथंनाङ्गीचक्रुर्भवन्तः एतच्छब्देति एतेनाव्ययीभावसमासकृतप्रत्यक्षशब्देन वाच्यम् तत्प्रवृत्तीति स्पार्शनप्रत्यक्षहेतोः स्पष्टत्वलक्षणत्वात् प्रत्यक्षस्य तत्रापीति अव्ययीभावकृतप्रत्यक्षेपि तच्छब्देति तेन अव्ययीभावसमासनिष्पन्न प्रत्यक्षशब्देनवाच्यत्वसम्भवात्तस्यस्पार्शनप्रत्यक्षस्येतिशेषः अनिन्द्रियेति मानसप्रत्यक्षस्य तच्छब्देति प्रत्यक्षशब्देन



(पं०)—एतच्छब्दवाच्यमिति प्रत्यक्षशब्दवाच्यं अक्षिशब्दपक्षेपरंपृच्छतिकश्चित् ।

(रत्ना०)-अथकथमेवं प्रत्यक्षः प्रेक्षाक्षणः प्रत्यक्षापक्ष्मलाक्षीति स्त्रीपुंसभावो ऽस्याव्ययीभावस्य सदा नपुंसकत्वान्नैवं प्रत्यक्षमस्यास्तीत्यर्शआदित्वेनादन्तत्वात् तद्भावसिद्धेः ।

(पं०)—अथकथमित्यादि ।

(रत्ना०)-अत्रोच्यते ॥ एवमपि प्रत्यक्षोबोधः प्रत्यक्षाबुद्धिरित्यत्र पौंस्नं स्त्रैणं च न प्राप्नोति नह्यत्र मत्वर्थीयार्थो घटते प्रत्यक्षस्वरूपस्यैव वेदनस्य बोधबुद्धिशब्दाभ्यामभिधानात् । अक्षाणाम्परमक्षव्यापारनिरपेक्षं मनोव्यापारेणासाक्षादर्थपरिच्छेदकं परोक्षमिति परशब्दसमानार्थेन परसूशब्देन सिद्धं । च शब्दौ द्वयोरपि तुल्यकक्षतां लक्षयतस्तेन या प्रत्यक्षस्य कैश्चित् ज्येष्ठताभीष्टा नासौ श्रेष्ठेति सूचितं द्वयोरपि प्रामाण्यंप्रति विशेषाभावात् । ननु कथमेतद्द्वैतमुपपद्यते यावता प्रत्यक्षमेवैकं प्रमाणमिति चार्वाकोऽवोचत् । अपरेतु प्रत्यक्षानुमानागमोपमानार्थापत्त्यभावसम्भवैतिह्यप्रातिभस्वभावान् भूयसो भेदान् प्रमाणस्य प्राचुस्तत्कथमेतदिति चेदुच्यते । समर्थयिष्यमाणप्रमाणभावेनानुमानेन तावच्चार्वाकस्तिरस्करणीयः अपरेतु सम्भवत्प्रमाणभावानामत्रैवान्तर्भावेनबोधनीयाः । तत्रानुमानागमौ परोक्षप्रकारावेव व्याख्यास्येते । उपमानन्तु नैयायिकमते तावत् कश्चित् प्रेष्यः प्रभुणा प्रेषयांचक्रे गवयमानयेति सगवयशब्दवाच्यमर्थमजानानः कञ्च न वनेचरं पुरुषमप्राक्षीत्कीदृग्गवयइति सप्राह यादृग्गौस्तादृग्गवयइति ततस्तस्य प्रेष्यपुरुषस्यारण्यानीं प्राप्तस्याप्तातिदेशवाक्यार्थस्मरणसहकारिगोसदृशगवयपिण्डज्ञानमयं सगवयशब्दवाच्योर्थ इति प्रतिपत्तिफलरूपामुत्पादयत्प्रमाणमिति । मीमांसकमतेतु येनप्रतिपत्त्रागौरुपलब्धो नगवयो नत्रातिदेशवाक्यं गौरिव गवयइति श्रुतं तस्य विकटाटवीपर्यटनलम्पटस्य गवयदर्शने प्रथमे समुत्पन्ने सति यत्परोक्षे गवि सादृश्यज्ञानमुन्मज्जत्यनेन सदृशः सगौरिति तस्य गोरनेन सादृश्यमिति वा तदुपमानम् । तस्माद्यत्स्मर्यतेतत् स्यात् सादृश्येन विशेषितं । प्रमेयमुपमानस्य सादृश्यं वा तदन्वितमिति वचनादिति तदुच्यते ।

(टि०)-एवमपीत्यादि अव्ययीभावसिद्धप्रत्यक्षप्रतिक्षेपार्थमाचार्यैर्दृष्टं प्रत्यक्षप्रेक्षाक्षणइत्यादिकं परेण अर्शआदिना अप्रत्ययेन अव्ययीभावसाध्यसिद्धिमुपढौकयांबभूवे तस्यापि निराकरणाय सूत्रउत्तरयामासुः प्रत्य-

क्षोबोधोत्रअर्शआदिप्रत्ययमन्तरेणापि प्रत्यक्षशब्दासिद्धेः अतोनाव्ययी-भावसमासप्रत्यक्षे घटामटाटचेत अपरेत्विति सांख्यमीमांसकप्रभाकर-कणभक्षाक्षपादसौगतचरकाः सम्भवदिति घटमानप्रामाण्यानां अत्रैवेति प्रत्यक्षपरोक्षद्वये अथप्रमाणद्वैतमेवाभिमतमार्हतानां तदन्येषामनुमानादी-नामपि सम्भवत् प्रामाण्यं भवद्भिः कथमङ्गीक्रियतेति चेन्नैवमप्रमाणस्य प्रमाणान्तर्भावोपिदुरुपपादः अन्यथाह्यन्धकारस्यालोकान्तर्भावोभवेत् अथ यदिसर्वेषाम्प्रमाणभावस्वीकारः सुविचारगोचरचारिष्णुतामश्नाति तत्प्र-माणद्वैतवादमदस्त्यज्यताञ्जैनाः एतदिति मलिनिमानमावहति तेषांपरोक्षां-शत्वेन प्रामाण्याङ्गीकारात् ननुवह्निमानयं पर्वतनितम्ब इत्यत्रानुमानमन्त-रेण धनञ्जयसत्वं कथंसिद्धिपद्धतिमादधाति मैवं तदापरोक्षात्कथं चिद्भिन्ना-नामेवानुमानादीनां प्रामाण्याभ्युपगमात् स्याद्वादमताभिप्रायेण द्वैतस्यानु-मानादिभिः कथञ्चिद्भिन्नस्यैव सम्मतत्वात् तस्माद्यदीत्यादि तस्मादिति ज्ञानात् यदिति गवयपिण्डंदृश्यते अटव्यां पर्यटतापुंसेतिशेषः सादृश्येनेति सादृश्यविशिष्टंपिण्डं विशिष्टंवासादृश्यंगोचरयत्संवेदनमुदीयेत तेन-विशेषितं सादृश्यंवेति गोगवयगतं तदन्वितमिति गोगवयपिण्डसम्बद्धं तदुच्यते इति उपमानमभिधीयते।

(पं०)–अत्रोच्यतेइति सूरिणा पौंस्नमिति पुंस्त्वम्। स्त्रैणमिति स्त्रीत्वम्। स्वभावानिति लक्षणान् एतदिति प्रमाणाद्वैतम्। अत्रैवेति द्वयएव स्मरणसहकारीत्यत्र। स्मरणं सहकारियस्य, नचातिदेशेति गद्येन चातिदेशवाक्यं, श्रुतमिति सम्बन्धः। अनेनेति गवयेन सगौरिति पिण्डाविषयं ज्ञानम्। अनेनेति गवयेन। यदिति गोपिण्डः सादृश्येनेति गवयसादृश्येन प्रमेयमिति गोचरः। तदन्वितमिति गवयान्वितम्।

(रत्ना०)–एतच्च परोक्षभेदरूपायां प्रत्यभिज्ञायामेवान्तर्भावयिष्यते।

(टि०)–एतच्चेति उपमानप्रामाण्येत्यादि।

(रत्ना०)–अर्थापत्तिरपि प्रमाणषट्कविज्ञातो यत्रार्थो ऽनन्यथाभ-वन्। अदृष्टं कल्पयेदन्यं सार्थापत्तिरुदाहृता इत्येवंलक्षणा।

(टि०)–यत्रेति देवदत्तादौ प्रमाणषट्केन प्रत्यक्षानुमानागमोपमानार्था-

पत्त्यभावलक्षणेन विज्ञातः अत्रतन्मतानुसारेण सामान्यतः प्रमाणषट्कशब्द-
प्रयोगः प्रकृतामर्थापत्तिं विहाय पञ्चकेनैवविज्ञातोऽर्थोदृष्टंकल्पयन्नर्थाप-
त्तिमुत्थापयति इति तात्पर्यार्थः अर्थइति पीनत्वादि अदृष्टमिति दिवसे-
भुञ्जानस्यादर्शनात् अन्यमिति रात्रिभोजनलक्षणं यथापीनोदेवदत्तो दिवा
नभुंक्ते अर्थापत्त्या बहुलान्धकारकरंबितदशादिशिनिशिभुंक्ते ।

(पं०)—अर्थइति पीनत्वादिः । अनन्यथा भवन्निति भोजनंविना अन्यथा न भवति
न घटते ।

(रत्ना०)-अनुमानान्तर्गतैव तथाह्यर्थापत्त्युत्थापकोऽर्थोऽन्यथानुपपद्य-
मानत्वेनानवगतो ऽवगतोवा दृष्टार्थपरिकल्पनानिमित्तं स्यात् । नतावद-
नवगतो ऽतिप्रसङ्गात् । अथावगतस्तर्ह्यन्यथानुपपद्यमानत्वावगमो ऽर्थापत्ते-
रेव प्रमाणान्तराद्वा प्राच्यप्रकारे परस्पराश्रयस्तथाह्यन्यथानुपपद्यमानत्वेन
प्रतिपन्नादर्थादर्थापत्तिप्रवृत्तिस्तत्प्रवृत्तेश्चास्यान्यथानुपपद्यमानत्वप्रतिपत्ति-
रिति । प्रमाणान्तरं तु भूयोदर्शनं विपक्षेऽनुपलम्भो वा भूयोदर्शनमपि
साध्यधर्म्मिणि दृष्टान्तधर्म्मिणिवा । यदिसाध्यधर्म्मिणि तदाभूयो-
दर्शनेनैव साध्यस्यापि प्रतिपन्नत्वादर्थापत्तेर्वैयर्थ्यम् । अथदृष्टान्तध-
र्म्मिणि तर्हि तत्र प्रवृत्तं भूयोदर्शनं साध्यधर्म्मिण्यप्यन्यथानुपपद्यमा-
नत्वं निश्चाययति तत्रैव वा तत्रोत्तरः पक्षो ऽसन्नखलुदृष्टान्तधर्म्मिणि
निश्चितान्यथानुपपद्यमानत्वो ऽर्थः साध्यधर्म्मिणि तथात्वेनानिश्चितः
स्वसाध्यङ्गमयत्यतिप्रसङ्गात् । प्रथमपक्षेतुलिङ्गार्थापत्त्युत्थापकार्थयोर्भेदा-
भावः । विपक्षेऽनुपलम्भात् तदवगमइति चेत् नन्वसावनुपलम्भमात्ररूपोऽ
निश्चितो निश्चितो वा तदवगमयेत् । प्रथमपक्षे तत्पुत्रत्वादेरपि गमकत्वा-
पत्तिः। निश्चितश्चेत् तर्ह्यनुमानमेवार्थापत्तिरापन्ना निश्चितान्यथानुपपत्ते-
रनुमानरूपत्वात् । नच सपक्षसद्भावासद्भावकृतो ऽनुमानार्थापत्त्योर्भेदः
पक्षधर्म्मतासहितादनुमानात्तद्रहितस्य प्रमाणान्तरत्वानुषङ्गात् । नच
पक्षधर्म्मत्ववन्ध्यमनुमानमेव नास्तीति वाच्यं । पित्रोश्च ब्राह्मणत्वेन
पुत्रब्राह्मणतानुमा सर्वलोकप्रसिद्धा नपक्षधर्म्ममपेक्षतइति भट्टेन स्वयम-
भिधानात् । यदपि प्रत्यक्षादेरनुत्पत्तिः प्रमाणाभावउच्यते । सात्मनो-

ऽपरिणामोवा विज्ञानं वा ऽन्यवस्तुनि सेति प्रत्यक्षाद्यनुत्पत्तिः। आत्मनो घटादिग्राहकतया परिणामाभावः प्रसज्यपक्षे पर्युदासपक्षे पुनरन्यस्मिन् घटविविक्तताख्ये वस्तुन्य भावे घटोनास्तीति विज्ञानमित्यभावप्रमाणम-भिधीयते तदपि यथासम्भवं प्रत्यक्षाद्यन्तर्गतमेव।

(टि०)-अतिप्रसङ्गादिति अप्रतीतानां वाङ्मनोर्विषयातीतानामप्यर्थापत्तेर्वेदनोत्पत्तेः तत्प्रवृत्तेरिति अर्थापत्तिप्रवृत्तेः अस्येत्यर्थस्य यदिसाध्ये-त्यादि साध्यस्येति भोजनस्य तर्हितत्रेति दृष्टान्तधर्मिणि तत्रैवेति दृष्टान्त-धर्म्मिण्येव निश्चितेति निश्चितमन्यथानुपपद्यमानत्वं यस्य तथात्वेनेति अन्य-थानुपपद्यमानत्वेन लिङ्गेति हेतुः तदवगमइत्यन्यथानुपपद्यमानत्वावगमः तादित्यन्यथानुपपद्यमानत्वं तत्पुत्रादेरप्युपाधिप्रवेशदूषितोपि तत्पुत्रत्वादि हेतुरपि देवदत्तादौ श्यामत्वं साधयेत्। नचसपक्षेत्यनुमाने सपक्षोस्ति सचा-र्थापत्तौ नास्त्येवेति नवाच्यं तद्रहितस्येति पक्षधर्म्मवर्जितस्य यदपीत्य-भावप्रमाणमभिधीयतेइति सम्बन्धः। प्रसज्येति द्वौनञौहि समाख्यातौ पर्यु-दासप्रसज्यकौ पर्युदासः सदृग्ग्राही प्रसज्यस्तुनिषेधकृत् इतिवचनात्। प्रसज्य आत्मनस्तदाकारपरिणामाभावाद्घटादिपदार्थसार्थोत्रनास्तीतिज्ञानमुदय-मासादयति पर्युदासेति भूतलादिव्यतिरिक्ते विवक्षितेघटादौ॥

(पं०)—अर्थइति पीनत्वादि। अन्यथेति रात्रिभोजनं विना अदृष्टार्थपरि-कल्पनानिमित्तमिति रात्रिभोजनपरिकल्पना निमित्तम्। अर्थादिति पीनत्वरूपात्।

(रत्ना०)-तथाहि गृहीत्वावस्तुसद्भावं स्मृत्वा च प्रतियोगिनम्। मानसं नास्तिताज्ञानं जायतेऽक्षानपेक्षया॥१॥ इतीयमभावप्रमाणजनिका सामग्री। तत्रचभूतलादिकं वस्तुप्रत्यक्षेण घटादिभिः प्रतियोगिभिः संसृष्ट-मसंसृष्टंवा गृह्येत। नाद्यः पक्षः प्रतियोगिसंसृष्टस्य भूतलादिवस्तुनः प्रत्यक्षेण ग्रहणे तत्रप्रतियोग्यभावग्राहकत्वेनाभावप्रमाणस्य प्रवृत्तिवि-रोधात्। प्रवृत्तौ वा न प्रामाण्यं प्रतियोगिनः सत्वेपि तत्प्रवृत्तेः द्वितीय-पक्षेत्वभावप्रमाणवैयर्थ्यं प्रत्यक्षेणैव प्रतियोगिनां कुम्भादीनामभावप्रति-

१ ज्ञानमित्यपि पाठान्तरम्।

पत्तेः। अथ न संसृष्टं नाप्यसंसृष्टं प्रतियोगिभिर्भूतलादिवस्तु प्रत्यक्षेण गृह्यते वस्तुमात्रस्य तेन ग्रहणाभ्युपगमादिति चेत्। तदपि दुष्टं संसृष्टत्वासंसृष्टत्वयोः परस्परपरिहारस्थितिरूपत्वे नैकनिषेधपरिविधानस्य परिहर्तुमशक्यत्वादिति सदसद्रूपवस्तुग्रहणप्रवणेन प्रत्यक्षेणैवायं वेद्यते। क्वचित्तु तदघटं भूतलमिति स्मरणेन तदेवेदमघटं भूतलमिति प्रत्यभिज्ञानेन योऽग्निमान्न भवति नासौधूमवानिति तर्केण नात्रधूमोऽनग्नेरित्यनुमानेन गृहे गर्गो नास्तीत्यागमेनाभावस्य प्रतीतेः क्वाभावप्रामाणं प्रवर्त्ततां सम्भवोपि समुदायेन समुदायिनो ऽवगमइत्येव लक्षणः सम्भवति खार्यां द्रोणइत्यादिर्नानुमानात्पृथक्। तथाहि खारीद्रोणवती खारीत्वात् पूर्वोपलब्धखारीवत्। ऐतिह्यं त्वनिर्दिष्टप्रवक्तृकं प्रवादपारम्पर्यमितीहोचुर्वृद्धा यथेहवटे यक्षः प्रतिवसतीति तदप्रमाणमनिर्दिष्टप्रवक्तृकत्वेन सांशयिकत्वात्। आप्तप्रवक्तृकत्वनिश्चयेत्वागमइति। यदपिप्रातिभमक्षलिङ्गशब्दव्यापारानपेक्षमकस्मादेवाद्यमे महीपतिप्रसादो भवितेत्याद्याकारं स्पष्टतया वेदनमुदयते तदप्यनिन्द्रियनिबन्धनतया मानसमिति प्रत्यक्षकुक्षिनिक्षिप्तमेव यत्पुनः प्रियाप्रियप्राप्तिप्रभृतिफलेन सार्द्धङ्गृहीतान्यथानुपपत्तिकात्मनः प्रसादोद्वेगादेर्लिङ्गादुदेति तत्पिपीलिकापटलोत्सर्प्पणोत्थज्ञानवदस्पष्टमनुमानमेवेति न प्रत्यक्षपरोक्षलक्षणद्वैविध्यातिक्रमः शक्रेणापि कर्त्तुं शक्यः

(टि०)-अभावरूपेगृहीत्वेत्यादि गृहीत्वा ज्ञात्वा वस्तुनोभूतलादेः सद्भावं प्रतियोगिनामिति घटादिकमभावेन विवक्षितं अभावरूपस्वात्सद्भावस्य शत्रुभूतम् मानसमिति मनोव्यापारद्रव्यसमुद्भूतं अक्षानपेक्ष्येति इन्द्रियव्यापारमन्तरेण तत्रेति भूतलादौ यत्र हि साक्षात्प्रतियोगी दृग्विषयतामेति नतत्राभावोभवेत्तस्य वस्तुमात्रस्येति तेन भट्टेन अयमित्यभावः आगमेनेति आगमोऽत्राप्तपुरुषवचनं नवीतरागादिप्रणीतधर्मशास्त्रम्।

(पं०)—समुदायेनेति खारीसमुदायेन समुदायिनइति द्रोणाः समुदायिनः।

प्रत्यक्षं लक्षयन्ति ।

## मू०-स्पष्टं प्रत्यक्षमिति ।

(रत्ना०)-प्रबलतरज्ञानावरणवीर्यान्तराययोः क्षयोपशमात्क्षयाद्वा स्पष्टताविशिष्टं वैशद्यास्पदीभूतं यत् तत्प्रत्यक्षं प्रत्येयम् ।

स्पष्टत्वमेव स्पष्टयन्ति ।

## मू०-अनुमानाद्याधिक्येन विशेषप्रकाशनं स्पष्टत्वमिति ।

अनुमानादिभ्यो वक्ष्यमाणपरोक्षप्रकारेभ्योऽतिरेकेण यद्विशेषाणां नियतवर्णसंस्थानाद्यर्थाकाराणां प्रतिभासनं ज्ञानस्य तत् स्पष्टत्वमिति ।

प्रत्यक्षस्य प्रकारप्रकाशनायाहुः

## मू०-तद्विप्रकारं सांव्यवहारिकं पारमार्थिकं चेति ।

संव्यवहारो बाधारहितप्रवृत्तिनिवृत्ती प्रयोजनमस्येति सांव्यवहारिकं बाह्येन्द्रियादिसामग्रीसापेक्षत्वादपारमार्थिकमस्मदादिप्रत्यक्षमित्यर्थः। परमार्थे भवं पारमार्थिकं मुख्यमात्मसन्निधिमात्रापेक्षमवध्यादिप्रत्यक्षमित्यर्थः।

(पं०)—बाधारहितप्रवृत्तिनिवृत्ती इति इष्टविषयेऽनिष्टविषये च ।

सांव्यवहारिकस्य प्रकारौ दर्शयन्ति ।

## मू०-तत्राद्यं द्विविधमिन्द्रियनिबन्धनमनिन्द्रियनिबन्धं चेति ।

(रत्ना०)-इन्द्रियाणि चक्षुरादीनि निबन्धनमस्येतीन्द्रियनिबन्धनम्। नन्विन्द्रियज्ञाने मनोऽपि व्याप्रियत्तीति कथं न तेन व्यपदेशः । उच्यते । इन्द्रियस्यासाधारणकारणत्वान्मनः पुनरनिन्द्रियवेदनेपि व्याप्रियतइति

साधारणं तत्। असाधारणेन च व्यपदेशो दृश्यते यथा पयः पवनातपादिजन्यत्वेप्यङ्कुरस्य बीजेनैव व्यपदेशः शाल्यङ्कुरः कोद्रवाङ्कुरोयमिति। अनिन्द्रियं मनोनिबन्धनं यस्य तत्तथेति। इदमिदानीं मनाग्मीमांसामहे। प्राप्यकारीणीन्द्रियाण्यप्राप्यकारीणि वेति। तत्र प्राप्यकारिण्येवेति कणभक्षाक्षपादमीमांसकसांख्याः समाख्यान्ति। चक्षुःश्रोत्रेतराणि तानि तथेति ताथागताः। चक्षुर्वर्ज्जानीति तु तथा स्याद्वादावदातहृदयाः।

तत्र प्रथमे प्रमाणयन्ति।

चक्षुः प्राप्य मतिं करोति विषये बाह्येन्द्रियत्वादितो
यद्बाह्येन्द्रियतादिना परिगतं तत्प्राप्यकारीक्षितं।
जिह्वावत्प्रकृतं तथा च विदितं तस्मात्तथा स्थीयतां
नात्रासिद्धिमुखश्च दूषणकणस्तल्लक्षणानीक्षणात्॥ १॥
अद्रिचन्द्रकलनेषु यापुनर्यौगपद्यधिषणा मनीषिणां।
पद्मपत्रपटलीविलोपवत् सत्वरोदयनिबन्धनैव सा॥ २॥
प्रथमतः परिसृत्य शिलोच्चयं निकटतः क्षणमीक्षणमीक्षते।
तदनुदूरतराम्बरमण्डलीतिलककान्तमुपेत्य सितात्विषम्॥ ३॥
कुर्म्महेऽत्र वयमुत्तरकेलीं कीदृशी दृगिह धर्म्मितयोक्ता।
किंतु मांसमयगोलकरूपा सूक्ष्मताभृदपरा किमु कापि॥ ४॥
आदिमा यदि तदापि किमर्थो लोचनानुसरणव्यसनी स्यात्।
लोचनं किमुत वस्तुनि गत्वा संसजेत् प्रियइव प्रणयिन्याम्॥ ५॥
प्रत्यक्षबाधः प्रथमप्रकारे प्राकारपृथ्वीधरसिन्धुरादिः।
संलक्ष्यते पक्ष्मपुटोपटङ्की प्रत्यक्षकाले कलयापि नो यत्॥ ६॥
पक्षे परत्रापि सएव दोषः सर्प्पन्न वस्तु प्रतिवीक्ष्यतेऽक्षि।
संसर्प्पणे वास्य सकोटरत्वप्राप्त्या पुमान् किन्न जरद्द्रुमः स्यात्॥ ७॥
चक्षुषः सूक्ष्मतापक्षे सूक्ष्मता स्यादमूर्त्तता।
यद्वाल्पपरिमाणत्वमित्येषा कल्पनोभयी॥ ८॥
यद्वाल्पपरिमाणत्वमित्येषा कल्पनोभयी॥ ८॥
स्याद्व्योमवद्व्यापकताप्रसक्त्या सर्वोपलम्भः प्रथमप्रकारे।

प्राकारकान्तारविहारहास्समुख्योपलम्भो न भवेत् द्वितीये ॥ ९ ॥
नखलु नखलु शस्त्रं स्वप्रमाणात्प्रथिष्ठे
पटकटशकटादौ भेदकारि प्रसिद्धं ।
अथ निगदसि तस्मिन् रश्मिचक्रं क्रमेण
प्रसरति तत एतत्स्यादनल्पप्रकाशम् ॥ १० ॥

तथाहि ।

प्रोद्दाममाणिक्यकणानुकारी दीपाङ्कुरस्त्वद्पटलीप्रभावात् ।
किन्नैव कश्मीरजकज्जलादीन् प्रथीयसोपि प्रथयत्यशेषान् ॥ ११ ॥
नन्वेवमध्यक्षनिराक्रिया स्यात् पक्षे पुरस्तादुपलाक्षितेऽस्मिन् ।
प्रौढप्रभामण्डलमण्डितोऽर्थो नाभासते यत्प्रतिभासमानः ॥ १२ ॥
अथाप्यनुद्भूततया प्रभायाः पदार्थसंपर्कजुषोप्यनीक्षा ।
सिद्धिस्तदानीं कथमस्तु तस्या ब्रवीषि चेत्तैजसताख्यहेतोः ॥ १३ ॥
रूपादिमध्ये नियमेन रूपप्रकाशकत्वे नच तैजसत्वं ।
प्रभाषसे चक्षुषि संप्रसिद्धं यथा प्रदीपाङ्कुरविद्युदादौ ॥ १४ ॥
तदिदं घुसृणविमिश्रण मन्थ्रपुरन्ध्रीकपोलपालीनां ।
अनुहरते व्यभिचाराद्रूपेक्षणसन्निकर्षेण ॥ १५ ॥
द्रव्यत्वरूपेपि विशेषणे स्याद्धेतोरनैकान्तिकताञ्जनेन ।
तस्यापि चेत्तैजसतां तनोषि तन्वादिना किन्तु तदा पराद्धम् ॥ १६ ॥
सौवीरसौवर्चलसैन्धवादि निश्चिन्वते पार्थिवमेव धीराः ।
कृशानुभावोपगमो ऽस्य तस्मादयुक्त एव प्रतिभात्यमीषाम् ॥ १७ ॥

तथाच ।

सौवीरसौवर्चलसैन्धवादिकं स्यादाकरोद्भूतिवशेन पार्थिवम् ।
मृदादिवन्नव्यभिचारचेतनं चामीकरेणानुगुणं निरीक्ष्यते ॥ १८ ॥
चामीकरादेरपि पार्थिवत्वं लिङ्गेन तेनैव निवेदनीयम् ।
शाब्दप्रमाणेन न चात्रबाधा पक्षस्य यन्नास्ति तदत्र सिद्धम् ॥ १९ ॥

अञ्जनं मरिचरोचनादिकं पार्थिवं ननु तवापि संमतम् ।
अञ्जनेपि तदसौ प्रवृत्तिमानप्रयोजकविडम्बडम्बरी ॥ २० ॥
हनूमल्लोललाङ्गूललम्बात् ते साधनादतः ।
नसिद्धिस्तैजसत्वस्य दृष्टसुस्पष्टदूषणात् ॥ २१ ॥
चक्षुर्न तैजसमभास्वरतिग्मभावा दम्भोविदित्यनुमितिप्रतिषेधनाच्च ।
सिद्धिं दधाति नयनस्य न तैजसत्वं तस्मादमुष्य घटते किमु रश्मिवत्ता॥२२॥

अपि च ।

प्रत्यक्षबाधः समलक्षि पक्षे न रश्मयो यद्दृशि दृष्टपूर्वाः ।
तथा च शास्त्रेण तवैव कालातीतत्वदोषोप्युदपादि हेतोः ॥ २३ ॥
अनुद्भवद्रूपजुषो भवयुश्चे द्रश्मयस्तत्र ततो न दोषः ।
नत्वेवमेतस्य पदार्थसार्थप्रकाशकत्वं न सुवर्णवत् स्यात ॥ २४ ॥
आलोकसाचिव्यवशादथास्य प्रकाशकत्वं घटनामियर्त्ति ।
नन्वेवमेतत् सचिवस्य किं स्यात् प्रकाशकत्वं न कुटीकुटादेः ॥ २५ ॥
अथास्तु कामं ननु तैजसत्वमुत्तेजितं किं न भवेत्त्वया ऽस्य ।
तथा च नव्यस्त्वदुपज्ञ एषोऽद्वैतप्रवादोऽजनि तैजसत्वे ॥ २६ ॥
उत्पद्यन्ते तरणिकिरणश्रेणिसंपर्कतश्चेत्
तत्रोद्भूताः सपदि रुचयो लोचने रोचमानाः ।
यद्गृह्यन्ते नखलु तपनालोकसंपत्प्रतानः
तस्मिन् हेतुर्भवति हि दिवा दीपभासामभासः ॥ २७ ॥

(टि०)–चक्षुः प्राप्येत्यादि नात्रेति चक्षुः प्राप्यकारीत्येवं लक्षणेऽस्मदाभिमतेऽसिद्धिप्रमुखः तल्लक्षणेति असिद्धिलक्षणानवलोकनात् १ अद्रिचन्द्रेत्यादि यौगपद्येति युगपद्बुद्धिः मनीषिणामित्यत्र साभिप्रायं जडबुद्धीनां विवेकपराङ्मुखत्वात् पद्मेति कमलदलसूचीव्यतिभेदइव सेति धिषणा २ स्याद्वयोमवदित्यादिव्यापकतेति चक्षुः सर्वव्यापकममूर्त्तत्वाद्यदेवं तदेवं यथा गगनं तथा चायं तस्मात्तथा द्वितीयेइति अल्पपरिमाणत्वे चक्षुः प्राकारकान्ताराद्यग्राहकमल्पपरिमाणत्वाद्यदेवं तदेवं यथा परमाणुः ३ नखल्वित्यादि नख-

लित्रीति नखच्छेदनिका लून्छेदने नखपूर्वःनखान् लुनातीतिक्विप च स्वरो ह्रस्वो नपुंसके नखलु सिद्धं तस्मिन्निति चक्षुषि ततइति रश्मिचक्रात् एतं-दिति चक्षुः अनल्पेति प्राकारादिस्थूलप्रकाशम् नन्वेवमित्यादि पुरस्ता-दिति पूर्वप्रक्रान्ते चक्षुरश्मिवदित्येवं रूपे यत्प्रतिभासेति यया दृशा गृह्यमाणः अथाप्यनुद्भूतेत्यादि तस्याइति प्रभायास्तैजसतेति चक्षुः प्रभावत्तैजसत्वात् प्रदीपवत् रूपादीत्यादि रूपेति द्रव्यस्य व्यवच्छेदः नियमेन मनसोऽव्यवच्छेदः संख्यासंयोगादिभिर्व्यभिचारः स्यादिति रूपादी-ति पदं साभिप्रायं तदिदमित्यादि अनुहरते इति अनुकरोति श्यामत्वात्ता-सां स्वभावकार्ष्ण्याच्छ्यामशरीरे कुङ्कुमशोभाभावान्निःश्रीकमित्यर्थः रूपेक्षणेति रूपप्रकाशकनयनसंयुक्तसमवायेन सन्निकर्षस्तैजसं रूपादि-मध्ये नियमेन रूपप्रकाशकत्वान्नयनवत्सन्निकर्षः परंरूपप्राकशको न तैजसः अतएवव्यभिचाराशन्नशोभाभाजनमित्यर्थः द्रव्यत्वेति चक्षुस्तैजसं द्रव्यत्वे सति रूपादिमध्ये नियमेन रूपप्रकाशकत्वादित्येवं रूपस्य अञ्जनं तैजसं अतएवहेतोरिति वचनभङ्गप्रसङ्गः सङ्गतिं न गतौ तस्यापीति अञ्जनस्यापि तन्वादिनेति शरीरादिना शरीरमादिशब्दात् पृथ्वीपृथ्वीधरसिन्धुरादितै-जसमङ्गीकुरु सौवीरेत्यादि कृशानुभावेति तेजसत्वाभ्युपगमः तैजसत्वं पावकानुभवः अस्येत्यञ्जनस्य अमीषामिति धीराणां अञ्जनं सौवीरसौवर्च-लादितो जायते तानि पार्थिवाणि तत्कथमञ्जनं तैजसत्वघटनाहेतुर्हेतुमद्विरो-धात् सौवीरेत्यादि आकरोद्भूतेति सौवीरादिपार्थिवमाकरोत्पन्नत्वात् सुव-र्णेन व्यभिचारज्ञानमनुगुणं युक्तियुक्तं न चामीकरेत्यादि तेनैवेति सुवर्णं पार्थिवमाकरोद्भूतवशत्वात् सौवीरादिवत् अत्रेति सुवर्णस्य पार्थिवत्व-प्रसाधके साधने यदिति यस्मात्तदित्यागमप्रमाणम् अत्रेति वादिनि जैने अतएवसुवर्णस्य तैजसत्वसिद्धिबद्धप्रतिज्ञेलिङ्गेभवदभिप्रेतोऽन्यतरासिद्धि-नामदोषो अनुषज्यते अञ्जनमित्यादि असाविति चक्षुस्तैजसत्वसाधको द्रव्यत्वे सति रूपादिमध्ये नियमेन रूपप्रकाशकादित्येवं रूप अप्रयोजक-एव चक्षुर्नतैजसमित्यादि अमुष्येति नयनस्य प्रत्यक्षबाधइत्यादि पक्षे-इति चक्षुरश्मिवदित्येवं रूपे तवैवेति तवतर्काभिप्रायेण प्रथमं प्रत्यक्ष-

विरुद्धे पक्षे हेतुः कालात्ययापदिष्टः अनुद्भवेत्यादि तत्रेति नेत्रे एत-
स्येति नेत्रस्य आलोकेत्यादि आलोकसहकारिकारणबलात् अस्येति
चक्षुषः एतत्साचिव्यस्येति आलोकसहकारिणः अथास्त्वित्यादिउत्तेजितमि-
ति प्रकाशितम् अस्येति कुड्यादेः तथाचेति कुड्यादिप्रकाशनेत्वदुपज्ञ-
मिति तव उपज्ञा यत्र अद्वैतेति सर्वत्रतैजसवादः तथा अद्वैतवादे आलो-
कसाचिव्यवशाद्भवतात्रिभुवनभवनकोणभाविभावानां तैजसत्वमेव प्रति-
पन्नम् ।

(पं०)—तल्लक्षणानीक्षणादिति असिद्धादिलक्षणादर्शनात् । सत्वरोदयनिबन्ध-
नैवेत्यत्र सत्वरोदयो ज्ञानस्य शीघ्रोत्पत्तिः । प्रथमप्रकारेइति लोचनानुसरणव्यसनअर्थ
इत्येवं रूपे । सर्पदिति गच्छत् । खल्विति निश्चये । नखलुशस्त्रमिति नखह-
रणिका । प्रथिष्ठे इति पृथुतरे । तस्मिन्निति महीयसि पदार्थे । रश्मिचक्रमिति
चाक्षुषम् । तत्प्रकाशमिति तंमहीयांसम्पदार्थं प्रकाशयति तत्प्रकाशम् प्रसरति ततप्तत
स्यादनल्पप्रकाशम् । पाठान्तरमेतत् पक्षेइति चक्षुः प्राप्यमर्तिं करोत्येवं रूपे । अनुद्भूत-
तयेति सदपि वस्तुयदोद्भूतं भवति तदा ज्ञायते यथा देहान्तर्गता वातादयः । तस्याइति
प्रभायाः । तैसजताख्यहेतोरिति चक्षुः प्रभावत्तैजसत्वात् प्रदीपवत् घुसृणेति
कुंकुमस्याख्या घुसृणः विश्रणमित्यत्र वाक्ये यथा न किञ्चिच्छोभाविशेषमावहति एवमयमि-
ति हेतुः रूपादिमध्ये नियमेन रूपप्रकाशकत्वलक्षणो न किञ्चित्प्रायइति भावः । रूपेक्षणस-
न्निकर्षेण व्यभिचारादिति यदिकिलरूपादिमध्ये नियमेन रूपप्रकाशत्वेनैव हेतुना
तैजसत्वं नयनस्य तदारूपेक्षणसान्निकर्षस्यापि तैजसत्वं प्राप्नोति सोऽपि रूपादि मध्ये नियमेन
रूपप्रकाशकोऽस्ति सन्निकर्षं विना रूपोपलब्धेरभावात् तस्य च तैजसत्वं भवतापि नेष्यत इत्यनै-
कान्तिकोऽयं हेतुरूपादिमध्येनयमेन रूपप्रकाशकत्वमपि भविष्यति तैजसत्वमपि न भविष्यति
यथा सन्निकर्षे । द्रव्यत्वरूपे इत्यादि चक्षुर्हिद्रव्यं द्रव्यत्वे सति यद्रूपादिमध्ये नियमेन
रूपप्रकाशकं तदेव तैजसं सन्निकर्षश्च न द्रव्यं किन्तु गुणइति चेत् एवञ्चाञ्जनेन व्यभिचार-
स्तद्धि द्रव्यत्वेसति रूपादिमध्ये नियमेन रूपप्रकाशकमस्ति नैर्मल्यापादनद्वारेण न च तैजसम् ।
अस्येति अञ्जनस्य अमीषामिति धीराणाम् । नव्यभिचारचेतनमिति सूरिवा-
क्यम् । चेतनमिति ज्ञानम् तेनैवेति आकरोद्भूतिवशेन हेतुना । शाब्दप्रमाणेनेति
आगमप्रमाणेन । यदिति यस्मात्कारणात् । तदत्रेति शाब्दप्रमाणम् । सिद्धमिति
वादिनां जैनानां मते भवदागमो न सिद्धिस्तस्याद्यापि विवादास्पदत्वात् तदसादिति

रूपादिमध्येइत्यादिनोक्तः। हनूमल्लोललाङ्गूललम्बात्ते साधनादत इति द्रव्यत्वे सति रूपादिमध्ये नियमेन रूपप्रकाशकत्वात् एवं रूपात्। दृष्टसुस्पष्टदूषणादिति अनैकान्तिकत्वाख्यात्। अभास्वरतिग्मभावादिति भास्वरस्य सतास्तिग्मभावो भास्वरतिग्मभावो न सः असस्तस्मात्। पक्षेइति चक्षुरश्मिवत्तैजसत्वात् एवं उक्त पूर्वं। तत्रेति नयने अथास्तुकाममिति कुटीकुटादेरपि प्रकाशकत्वं भवत्वितिभावः। अस्येति कुटीकुटादेः। तत्रेति नयने। चेदेवं ब्रूषे तत्र नयने तरणिकिरणश्रेणिसंपर्कतो रुचयउद्भूताउत्कटा उत्पद्यन्ते परं ता रुचयो यल्लोचने रोचमानाः खलु न गृह्यन्त इति योगः तस्मिन्नग्रहणे तपनालोकसम्पत्प्रतानो हेतु रविकिरणहतानां तेषां चक्षूरश्मीनां न दर्शनमिति सम्बन्धः।

(रत्ना०)-अत्रेयं प्रतिक्रिया।

मुष्टिग्राह्ये कुवलयदलश्यामलिम्नाऽविलिप्ते
स्फीते ध्वान्ते स्फुरति चरतो घूककाकोदरादेः।
किं लक्ष्यन्ते क्षणमपि रुचो लोचनेनैव यस्मात्
आलोकस्य प्रसरणकथा काचिदप्यत्र नास्ति॥ २८॥

उत्पत्तिरुद्भूततयाथ तासां तत्रैव यत्रास्ति रविप्रकाशः।
काकोदरादेरपि तर्हि नैताः कीटप्रकाशे कुशला भवेयुः॥ २९॥

अविवरतिमिरव्यतिकरपरिकरितापवरकोदरे क्वचन।
वृषदंशदृशि न दृष्टा मरीचयः किमु कदाचिदथ॥ ३०॥

अतएवविलोकयन्ति सम्यक्तिमिराङ्कूरकरम्बितेपि कोणे।
मूषिकपरिपन्थिनः पदार्थान् ज्वलनालोकविजृम्भणं विनैव॥ ३१॥

(टि०) मुष्टीत्यादि अत्रेति निशीथे उत्पत्तिरित्यादि उद्भूततया बाहुल्यतया तासामिति रुचीनाम् तत्रैवेति प्रदेशे काकोदरादेरिति सर्प्पप्रमुखस्य एताइति रुचयः अविवरेत्यादि परवचनमेतत् वृषदंशेति दंशदशने वृषान् मूषकान् दशतीति कर्म्मण्यण् मार्ज्जारस्तन्नेत्रे न दृष्टाइति अपितुदृश्यते एव अतएवेत्यादि अतइति मरीचिचयप्रभावादेव तिमिरेति अन्धकारबहुलेपि मूषकपरीति मार्ज्जारः।

(पं०)—काकोदरादेरिति सर्पादेः। किंलक्ष्यन्ते इत्यादि किं नैव लक्ष्यन्ते इति सण्टङ्कः। एताइति रुच्ययः। किमुकदाचित् अथेति अहो जैन किन्नदृष्टामरीचय इति पृच्छा॥

(रत्ना०)-अत्रोत्तरम्।

चाकचिक्यप्रतीभास मात्रमत्रास्ति वज्रवत्।
नांशवः प्रसरन्तस्तु प्रेक्ष्यन्ते सूक्ष्मका अपि॥ ३२॥

मार्ज्जारस्य यदीक्षणप्रणयिनः केचिन्मयूखाः सखे
विद्येरन्नतदा कथं निशि भृशं तच्चक्षुषा प्रेक्षिते।
प्रोन्मीलत्करपुञ्जपिञ्जरतनौ सञ्जातवत्युन्दरे
प्रोज्जृम्भेत तवापि हन्तधिषणा दीप्रप्रदीपाद्यथा॥ ३३॥

कृशनरतया तेषां नोचेदुदेति मतिस्तव-
प्रभवति कथं तस्याप्यस्मिन्नसौ निरुपप्लवा।
घटननिपुणा साक्षात्प्रेक्षाविधौहिततिस्त्विषां
नखलु नसमाधीमन् सा चोभयत्र विभाव्यते॥ ३४॥

अमूदृग्मूषिकारीणां तस्मादस्ति स्वयोग्यता।
यया तमस्यपीक्षन्ते न चक्षूरश्मिवत्पुनः॥ ३५॥

इत्थं न चक्षुषि कथंचिदपि प्रयाति
संसद्धिपद्धतिमियं खलु रश्मिवत्ता।
तस्मात्कथं कथय तार्किकचक्षुषः स्यात्
प्राप्यैव वस्तुनि मतिप्रतिबोधकत्वं॥ ३६॥

बहिरर्थग्रहोन्मुख्यं बहिः कारणजन्यता।
स्थायित्वं वा बहिर्देशे किं बाह्येन्द्रियता भवेत्॥३७॥

तत्रादिमायां भिदिचेतसास्यादेतस्य हेतोर्व्यभिचारचिह्नं।
अप्राप्यकारिप्रकारोति यस्मान्मन्दाकिनीमन्दरबुद्धिमेतत्॥ ३८॥

दोषः सएवोत्तरकल्पनायां यदात्मनः पुद्गलएष बाह्यः।
चेतश्चतस्मादुपजायमानमेतद्बहिः कारणजन्यताभृत्॥ ३९॥

चेतः सनातनतया कलितस्वरूपं सर्वापकृष्टपरिमाणपवित्रितञ्च ।
प्रायः प्रियः प्रणयिनीप्रणयातिरेकाद्देतत्करोति हृदये ननु तर्कतज्ज्ञाः ॥४०॥
एतदत्र वितनीक्रियमाणं प्रस्तुतेतरदिव प्रतिभाति ।
निस्तराय च भवेदिति चिन्त्यं तद्विलोक्य गुरुगुम्फितवृत्तिम् ॥ ४१ ॥
पक्षे तृतीये विषयप्रदेशः शरीरदेशो यदि वा बहिः स्यात् ।
स्थायित्वमाद्ये विषयाश्रितत्वं यद्वाप्रवृत्तिर्विषयोन्मुखी स्यात् ॥ ४२ ॥
प्राचीनपक्षे प्रतिवाद्यसिद्धिकलङ्कपङ्कः समुपैति हेतोः ।
स्याद्वादिना यत्प्रतिवादिनास्य नाङ्गीकृतमेयसमाश्रितत्वम् ॥ ४३ ॥
पक्षे तथा साधनशून्यतास्मिन् दृष्टान्तदोषः प्रकटः पटूनाम् ।
जिह्वेन्द्रियं नार्थसमाश्रितं यद्विलोकयामासु रमी कदाचित् ॥ ४४ ॥
द्वितीयकल्पे किमसौ प्रवृत्तिरर्थाभिमुख्येन विसर्प्पणं स्यात् ।
आश्रित्य किंवा विषयप्रपञ्चं प्रतीतिसंपत्प्रतिबोधकत्वम् ॥ ४५ ॥
पक्षे पुरश्चारिणि सिद्धिवन्ध्यं स्यात्साधनं जैनमतानुगानां ।
यस्मान्न तैर्लोचनरश्मिचक्रमङ्गीकृतं वस्तुमुखं प्रसर्पत् ॥ ४६ ॥
निदर्शनस्य स्फुटमेव दृष्टं वैकल्यमत्रैवहि साधनेन ।
पदार्थसार्थं प्रतियन्नसर्प्पज्जिह्वेन्द्रियं केनचिदिष्टपूर्वम् ॥ ४७ ॥
पक्षान्तरेतु व्यभिचारमुद्रा किंचेतसा नैव समुज्जजृम्भे ।
यस्मात्तदप्राप्य सुपर्वशैलस्वर्गे समुत्पादयति प्रतीतिम् ॥ ४८ ॥

शरीरस्य बहिर्देशे स्थायित्वं यदि जल्प्यते ।
बाह्येन्द्रियत्वमत्र स्यात् संदिग्धव्यभिचारिता ॥ ४९ ॥
अप्राप्तार्थपरिच्छेदेनापि सार्द्धं न विद्यते ।
हेतोर्बाह्येन्द्रियत्वस्य विरोधो वत कश्चन ॥ ५० ॥
क्वचित्साध्यनिवृत्यातु हेतुव्यावृत्तिदर्शनात् ।
प्रतिबन्धप्रसिद्धिश्चेत्तदाऽत्रापि कथं न सा ॥ ५१ ॥
रसनस्पर्शनघ्राणश्रोत्रान्येन्द्रियताबलात् ।
चक्षुरप्राप्यविज्ञातृमनोवत् प्रतिपद्यताम् ॥ ५२ ॥

साध्यव्यावृत्तितोऽत्रापि हेतुव्यावृत्तिरीक्षिता ।
न च कश्चिद्विशेषोऽस्ति येनैकत्रैव सा मता ॥ ५३ ॥

बाह्येन्द्रियत्वं सकलङ्कमेवं न तार्किकान्प्रीणयितुं तदीष्टे ।
भ्रूविभ्रमोदुर्भगभामिनीनां वैदग्ध्यभाजो भजते न चेतः ॥ ५४ ॥

किंचात्र संसूचितमादिशब्दाद्वृत्ते पुरश्चारिणिकारकत्वं ।
यत्राप्यकारित्वसमर्थनाय नेत्रस्य तत्काणदृगञ्जनाभम् ॥ ५५ ॥

यस्मादिदं मन्त्रजपोपसर्पत्प्रोद्दामरामाव्यभिचारदोषात् ।
उत्तालवेतालकरालकेलीकलङ्कितश्रीकमिवा वभाति ॥ ५६ ॥

तथाहि ।

कनकनिकषस्निग्धां मुग्धां मुहुर्म्मधुरस्मितां
चटुलकुटिलभ्रूविभ्रान्तिं कटाक्षपटुच्छटाम् ।
त्रिजगतिगतां कश्चिन्मन्त्री समानयति क्षणा-
त्तरुणरमणीमारान्मंत्रान्मनो भुवि संस्मरन् ॥ ५७ ॥

कश्चिदत्र गदतिस्म यत्पुनर्मन्त्रमंत्रणगवीसमानयेत् ।
युक्तमेव मदिरेक्षणादिकं तेन नाभिहितदूषणोदयः ॥ ५८ ॥

मन्त्रस्य साक्षाद्घटनाप्रियादिना परम्परातो यदि वा निगद्यते ।
साक्षान्न तावद्यदयं विहायसोध्वनिस्वरूपस्तवसम्मतो गुणः ॥५९॥

ततोऽस्य तेनैव समंसमस्तिसंसक्तिवार्त्ता नतुपक्ष्मलाक्ष्या ।
अथाक्षरालम्बनवेदनं स्यान्मंत्रस्तथाप्यस्त्वियमात्मनैव ॥ ६० ॥

अथापि मंत्रस्य निवेद्यते त्वया संसक्तिरेतत्पतिदेवतात्मना ।
सन्तोषपोषप्रगुणाच सा प्रियां प्रियं प्रति प्रेरयति स्वयोगिनीम् ॥६१॥

ब्रूमहेऽत्र ननुदेवतात्मना मन्त्रवर्णविसरस्य का घटा ।
अम्बरस्य गुण एव तत्कथं देवतात्मनि भजेत सङ्गतिम् ॥ ६२ ॥

आश्रयद्वारतो ऽप्यस्य संसर्गो नास्ति सर्वथा ।
व्यापकद्रव्ययोर्यस्मात् संसर्गो नामुनामतः ॥ ६३ ॥

व्यापकेषु वदति व्यतिषङ्गं यस्तु तेन मनसा ध्वनिना च ।
तीतवस्तुविषयेण विमृश्य स्पष्टएव विलसन् व्यभिचारः ॥ ६४ ॥

अयस्कान्तादनेकान्तस्तथाऽत्र परिभाव्यतां ।
आक्षेपश्चसमाधिश्च ज्ञेयो रत्नाकरादिह ॥ ६५ ॥

कारकत्वमपि तन्न शोभते प्राप्यकारिणि यदीक्षणे मतं ।
प्राप्यवस्तु वितनोति तन्मतिं नैव चक्षुरिति तत्त्वनिर्णयः ॥६६॥

अद्रिचन्द्रकलनेषु येत्यदः प्राक्प्ररूपितमुपैति नो घटां ।
रश्मिसञ्चयविपञ्चितं हि तत्तेव तत्र नितरां व्यपाकृताः ॥६७॥

किंच ।

चक्षुरप्राप्यधीकृत्व्यवधिमतोऽपि प्रकाशकं यस्मात् ।
अन्तःकरणं यद्वद्व्यतिरेके स्यात् पुनारसना ॥ ६८ ॥

अथद्रुमादिव्यवधानभाजः प्रकाशकत्वन्दहशे न दृष्टौ ।
ततोऽप्ययं हेतु परसिद्धतायां धौरेयभावं विभराम्बभूव ॥६९॥

एतन्न युक्तं शतकोटिकाच स्वच्छोदकस्फाटिकभित्तिमुख्यैः ।
पदार्थपुञ्जेव्यवधानभाजि सञ्जायते किं नयनान्नसंवित् ॥७०॥

दम्भोलिप्रभृति प्रभिद्यभिदुराश्चेद्रोचिषश्चक्षुषः
संसर्गोपगताः पदार्थपटलीं पश्यन्ति तत्र स्थितां ।
एवं तर्हिसमुच्छलन्मलभरं भित्वाजलं तत्क्षणात्
तेनाप्यन्तरितास्थिती ननिमिषानालोकयेयुर्न किम् ॥ ७१ ॥

विध्यातास्तेन ते चेद्विमलजलभरात् किंभजन्ते न शान्ति
किञ्चांभः काचकूपोदरविवरगतं निष्पतेत् तत्तदानीं ।
दोषश्चान्नैषतूर्णं यदयमुदयते नूतनव्यूहरूपः
सर्पेयुस्तर्हि नैताः कथमपिरुचयो लोचनस्यापि तस्मिन् ॥ ७२॥

१ किमपि इत्यपि पाठः । २ उदक इत्यपि पाठः ।

भवतिपरिगमश्चेत् वेगवत्त्वा दमीषां
कतिपयकलयास्तु क्षीरपातस्तदानीं ।
नच भवति कदाचिद्बुद्बुदस्यापि
तस्मात् प्रपतनमिति युक्तस्तस्य नाशः किमाशु ॥ ७३॥

किंच ।

कलशकुलिशप्राकाराद्यत्रिविष्टपकन्दरा
कुहरकलितं विश्ववस्तु प्रतिक्षणभङ्गुरम् ।
ज्वलनकलिकावर्तिकत्वस्मिन् निरन्तरताभ्रमः
प्रभवतिवदन्नित्थंशाक्यः कथं प्रतिहन्यते ॥ ७४ ॥
तस्थौ स्थेमा तदस्मिन् व्यवधिमदमुना प्रेक्ष्यते येन सर्वं
तत्सिद्धा नेत्रबुद्धिर्व्यवधिपरिगतस्यापि भावस्य सम्यक् ।
कुड्यावष्टब्धबुद्धिर्भवति किमुनचेन्नैदृशीयोग्यतास्य
प्राप्तस्यापि प्रकाशे प्रभवति न कथं लोचनाद्गन्धबुद्धिः॥७५॥
किंवा न प्रतिभासते शशधरे कर्म्मापि तद्रूपवत्
दूराचेद्विलसत् तदस्य हृदये लक्ष्येत किंलांछनं ।
तस्माच्चक्षुषि योग्यतैव शरणं साक्षी च नः प्रत्यय-
स्तत्तर्कप्रगुणप्रतीहिनयनेष्वप्राप्यधीकर्तृताम् ॥ ७६ ॥

(टि०)-चाकचिक्येत्यादि अत्र चक्षुषि कुशतरेत्यादि तेषामिति रश्मीनां तस्यापीति बिडालस्य अस्मिन्निति उन्दरे असाविति मतिः साचेति त्विषां सन्ततिः उभयत्रेति त्वक्चक्षुषि ओतुचक्षुषि च इत्थमित्यादि तार्किकेति षट्तर्कभाषापारितर्ककर्कशमते इतिसोल्लुण्ठवचनं प्रतिबोधकत्वमिति ज्ञानोत्पादकत्वम् तत्रादिमायामित्यादि तत्रेति बाह्येन्द्रियत्वादिति हेतौ एतदिति मनः दोषःसएवेत्यादि एषइति चेतो वर्गणारूपः तस्मादिति पुद्गलात् अथैवं मन्यसेचेतोनित्यं ततः कथंकारं कारणं जन्यं स्यादित्याशंक्याह चेतः सनातनेत्यादि सनातनेति नित्यतया तन्मते चेतोनि त्यमित्यर्थः सर्वापकृष्टेति अणुपरिमाणं मनः प्राचीनेत्यादि

अस्येति विषया श्रितस्वरूपस्य हेतोः पक्षेपुरइत्यादिसाधनमित्यर्थाभिमुख्येन विसर्पणं जैनानामसिद्धम् तैरिति जैनैः अप्राप्तार्थेत्यादि चक्षुरप्राप्यविषये मतिं करोति बाह्येन्द्रियत्वाज्जिह्वावादित्यपि हेतोर्नविरोधः क्वचित्साध्येत्यादि तन्मतेहि विपक्षेऽव्यासावपि साधनस्य व्यावृत्ति पूर्वं साध्यव्यावृत्तिरिष्यते अतः क्वचित्साध्येति प्राप्यकारित्वव्यावृत्त्या हेतोरिति बाह्येन्द्रियत्वस्य अप्राप्तेति यत्प्राप्यकारि न स्यात् तद्बाह्येन्द्रियमपि न यथा मनः एवं विधे- व्यावृत्तिप्रधाने साधने प्रतिबन्धेति प्रतिबन्धस्याविनाभावस्य प्रसिद्धिः अत्रापीति चक्षुरप्राप्यकारीत्येवं रूपे सेति प्रतिबन्धप्रतिपत्तिः अस्मन्मतेऽयं स्वभावो विपक्षे साध्यव्यावृत्तिपूर्वा साधननिवृत्तिः साध्यव्यावृत्तीत्यादि सेति प्रतिबंधप्रसिद्धिः तावकानुमाने आस्माकीने च समानाउभयोर्विशेषा- भावात् । यस्मादिदमित्यादि सकलङ्कमिति सन्दिग्धानैकान्तिकत्वदू- षितम् कारकत्वमिति यत्कारकं तत्प्राप्यकारीतिव्याप्तिः यस्मादिति कार- णात् इदमिति कारकत्वं मन्त्रः प्राप्यकारी रामाद्याकर्षणकारकत्वात् अत- एवानैकान्तिकोऽयं हेतुः कश्चिदत्रेत्यादि युक्तमिति सम्बद्धमेव मदिरेति नारीप्रभृतिकम् तेनेति कारणेन भवद्भिरभिहितमुक्तं दूषणं तस्योदयो न मन्त्रस्येत्यादि विहायस इति आकाशस्य शब्दोम्बरगुणोभवतः सम्मतःयो यस्य गुणः सतेनैव सम्बद्धो भवति नान्येन ततोऽस्येत्यादि ततः कारणा- दस्येति ध्वनिरूपस्य मन्त्रस्य अनेनेति आकाशेन वेदनमिति ज्ञानं इयमिति संसक्तिवर्त्ता ज्ञानमात्मगुणः अतएवात्मसम्बद्धो भवतु अथापीत्यादि एतत्पतीति एतस्य मन्त्रस्याधिष्ठातृदेव्या सेति अधिष्ठात्री स्त्रयोगिनीमित्यात्मसम्बद्धां आश्रयेत्यादि परम्परापक्षस्य परिहारः आश्रयस्य गगनस्य द्वारेण मंत्रवर्णविसरो गगने संसज्यते आकाशं पक्ष्मालाक्ष्याइत्यपि नघटते व्यापकेति आकाशात्मनोः असु- नेति भवदाचार्येण व्यापकेष्वित्यादि व्यतिषंगमिति संयोगं तेनेति भवतांचतुर्णां मध्येकेनापि यइति मनसः प्राप्यकारित्ववादिवैशेषिकादिः मनसेति अप्राप्यकार्यपिमनोध्वनिश्चकारकं व्यभिचारः कारकत्वाख्यहेतोः

अद्रिचन्द्रेत्यादि कारकत्वहेतोरनैकान्तिकत्वं कोभावः अतीतवस्तु विषयस्य मनसः शब्दस्यच यद्यपि चिंतकत्वेनार्थप्रकाशकत्वेन च कारकत्वमस्ति तथापि प्राप्यकारित्वं नास्ति विषयस्यातीतत्वात् अयस्कान्तोहिकारकमस्ति परमप्राप्यकारी तेइति रश्मयः तत्रेति चक्षुषि व्यपाकृताइति पूर्वोक्त प्रकारेण निराकृताः चक्षुरप्राप्येत्यादि व्यतिरेकइति यत्प्राप्यकारि न भवति तद्व्यवधिमत्प्रकाशकं न भवति यथाजिह्वा अथद्रुमेत्यादि ततोऽपीति अदर्शनादेव अयमिति व्यवधिमतोपि प्रकाशकत्वादित्येवं रूपः एतन्नेत्यादि शतकोटिर्वज्रं हीरकश्च संविदिति ज्ञानं दम्भोलीति भिदुगइति मंदनशीलाः तत्रेति व्यवधाने मलभरामिति कलुषमित्यर्थः तेनेति सलिलेन। अनमिषानिति मत्स्यान् विध्याताइत्यादि विध्याताःउपशान्ता तेनेति कलुषजलेन तेइति नयनरश्मयः नूतनेति नव्यकाचकूपरचनाविशेषः एताइति लोचनरुचयः तस्मिन्निति काचकूपेनव्यव्यूहस्य तत्कालोत्पद्यमानत्वात् भवतीत्यादि परिगमइति वेगेनगमनं अमीषामिति नेत्रकिरणानां कतिपयेति लेशेनापि तस्मादिति काचकूपात् तस्येति काचकूपस्य कलशेत्यादि तस्मिन्निति कलशकुलिशादौ यथानवनवोत्पद्यमानापि ज्वाला सैवेयमिति प्रतीयते कलशकुलिशादिरपि तस्थावित्यादि अस्मिन्निति काचकूपादौ स्थिरएवकाचकूपः अमुनेति चक्षुषा अस्येति चक्षुषः किंवानेत्यादि कर्मापीति गतिक्रियापि तद्रूपवदिति वर्तुलनिर्म्मलशशलांछनरूपवत् अस्येति निशाकरस्य नइत्यस्माकं तर्कप्रगुणेति न्यायतर्कन्यायसारकन्दलीकिरणावली प्रमुखप्रमाण ग्रन्थवीथीविचारणप्रवणप्रोल्लसत्प्रचुरप्रज्ञाप्राग्भारविस्फूर्जितगुणगणकलितेति तज्जयात् सोपहासवाक्यम्।

(पं०)—तच्चक्षुषेति मार्जारचक्षुषा। अत्र काव्ये तवापिभिषणा कथन्नप्रोज्जृम्भतें इति संयोगः। तस्यापीति ओतोरपि। अस्मिन्निति मूषिकेमतिप्रबोधकत्वमिति प्रत्यक्षलक्षणमितिजनकत्वम्। तर्कतज्ज्ञाइति नित्यानित्यंमनः शुभाशुभचिन्ताहेतुत्वस्वभावात्। मनो अणुपरिमाणं न भवतिकरणत्वाल्लोचनादिवत्। एवंप्रायः प्रयोगाविदुराः अर्थसमाश्रितमिति अर्थाश्रेयम्। आश्रित्येति उद्दिश्य। पुरश्चारिणीति प्रथमे। सन्दिग्धव्यभिचारितेति। अनैकान्तिकत्वम्। अप्राप्तार्थपरिच्छेदेनापीति अप्राप्यकारित्वेनापि।

कश्चिदिति यत् प्राप्यकारि न भवति तद्बाह्येन्द्रियमपि न भवति यथा मनः। एवंविधजैनोक्ते व्यावृत्तिप्रधानेसाधने। अत्रापीति उत्तरपद्येन वक्ष्यमाणे प्रयोगे। सेति प्रतिबन्धप्रसिद्धिः सकलङ्कमिति सन्दिग्धानैकान्तिकत्वदूषितम्। पुरश्चारिणीति चक्षुःप्राप्येत्यस्मिन् आरादिति दूरात् युक्तमिति सम्बद्धम् अस्येति शब्दस्य। तेनेति विहायसा। अथापीति परम्परापक्षस्योपक्षेपः स्वयोगिनीमिति स्वसम्बद्धां आश्रयद्वारतइति शब्दस्याश्रयोह्याकाशः सचसर्वव्यापी। अस्येति मन्त्रवर्णविसरस्य। व्यापकेष्विति आत्मादिषु। यस्त्विति मनसः प्राप्यकारित्ववादीवैशेषिकादिः। व्यभिचारइति कारकत्वहेतोरनैकान्तिकत्वं को भावः अतीतवस्तुविषयस्य मनसः शब्दस्य चयद्यपिचिन्तकत्वेनार्थप्रकाशकत्वेन चकारकत्वमस्ति तथापि प्राप्यकारित्वं नास्ति विषयस्य तीतत्वात्। अयस्कान्तादनेकान्तइति सहिकारकमस्ति परं अप्राप्यकारी। अत्रेति कारकत्वहेतौ। मतमिति भवतामिष्टम्। प्राप्यवस्त्वित्यादि चक्षुःकर्तृवस्तुप्राप्यमतिनैववितनोतीतियोजना। तत्रेति नयने। नूतनव्यूहरूपइति नवीनरचनारूपः परिगमइति प्रवशः। क्षीरपातइति जलगलनम्। कर्मापितद्रूपवदिति यथा तद्रूपं प्रकाशते। एवं गगनमपिप्रकाशताम् न च प्रकाशते तस्माद्योग्यतैव प्रमाणम्। अस्येति शशधरस्य।

(रत्ना०)--बौद्धाः पुनरिदमाहुः श्रोत्रं नप्राप्यबुद्धिमाधत्ते।
दिग्देशव्यपदेशान् करोति शब्दे यतोऽदृग्वत् ॥ ७७ ॥

तथाहि।

प्राच्या मत्र विजृम्भते जलमुचामत्यूर्जितं गर्ज्जितं
प्रोन्मीलत्यलमेष चातकरवो ऽक्षामः क्षणं दक्षिणः।
केकाः केकिकुटुम्बकस्य विलसन्त्येताः कलाः काननाद्
दिग्देशव्यपदेशवानिति न किं शब्देऽस्ति सम्प्रत्ययः॥७८॥

प्राप्यकारि यदितु श्रवणं स्यात् तर्हि तत्र न कथञ्चन सैषः।
प्रस्तुतः समुदियाद्व्यपदेशः शर्करास्पृशियथारसनायाम् ॥ ७९॥

वेश्यानुरागप्रतिमं तदेतत् सुस्पष्टदृष्टव्यभिचारदोषात्।
घ्राणंयदेतद्व्यपदेशभाजं प्राप्तप्रकाशं कुरुते मनीषां ॥ ८० ॥

तथा च ।

मन्दंमन्दमुदेत्ययम्परिमलः प्राग्माधवीमण्डपा-
भूयः सौरभमुद्गमंत्युपवने फुल्लाः स्फुटंमल्लिकाः ।
गन्धोबन्धुरएषदक्षिणदिशः श्रीचन्दनात्प्राप्तवा-
नित्यंवं ननुविद्यते तनुभूतां घ्राणात् तथाप्रत्ययः ॥ ८१ ॥

अस्ति त्वगिन्द्रियेणापि व्यभिचारविनिश्चयः ।
शेमुषी मादधानेन दिग्देशव्यपदेशिनीम् ॥ ८२ ॥

तथाहि ।

सेयं समीरलहरी हरिचन्दनेन्दुसंवादिनी वनभुवः प्रसभम्प्रवृत्ता ।
स्फीतस्फुरत्पुलकपल्लविताङ्गयष्टिं मा मातनोतितरुणीकरपल्लवश्च ॥८३॥

अथानुमानादधिगम्य तेषां हेतूस्ततस्तद्व्यपदेशिनी धीः ।
नघ्राणतः स्पर्शनतश्चतादृक्प्रत्यक्षरूपा प्रथतेमनीषा ॥ ८४ ॥

श्रोत्रेपि सर्वन्तादिदं समान मालोकमानोपिन मन्यसेकिम् ।
दृष्टव्यलीकामपि कामीनीं यत्संमन्यते कामुक एवसाध्वीं ॥ ८५ ॥

स्मृत्वायथैवप्रतिबन्धमाशुशंखादिशब्दोयमिति प्रतीतिः ।
प्राच्यादिदूरादिगतेपि शब्दे तथैवयुक्ता प्रतिपत्तिरेषा ॥ ८६ ॥

दिग्देशानां श्रुतिविषयताकिंच नो युक्तियुक्ता
युक्तत्वेवा भवति नकथं ध्वानरूपत्वमेषां ।
तस्माद्भिन्नप्रमितिविषयास्तेविशिंषन्ति शब्दं-
सिद्धेचैवं भवतुसुतरां साधनेसाध्यसिद्धिः ॥ ८७ ॥

अपि च

गृह्यते यदिविनैष संगतिं किंतदानुगुणमारुते ध्वनौ ।
दूरतोपिधिषणा समुन्मिषदेऽन्यथा तु निकटेपि नैवसा ॥ ८८ ॥

मुहुर्मरुति मन्थरं स्फुरतिसानुलोमागमे
समुल्लसितवल्लकीक्वणकलाकलापप्लुता ।

सकामनवकामिनीकलितघोलनाडम्बरा
न किं निशि निशम्यते सपदि दूरतः काकली ॥ ८९ ॥
पटुघटितकपाटसंपुटौघे भवति कथं सदनेऽथ शब्दबुद्धिः ।
पटुघटितकपाटसंपुटौघे भवति कथं सदनेऽपि गन्धबुद्धिः ॥९०॥

तथाहि

कर्पूरपारीपरिरम्भभाजि श्रीखण्डखण्डे मृगनाभिमिश्रे ।
धूमायमाने ऽपिहितेऽप्यगारे गन्धप्रबन्धो बहिरभ्युपैति ॥ ९१ ॥
द्वारावृतेऽपि सदने प्रणयप्रकर्षादेवं प्रिये स्फुरदपत्रपया स्खलन्ती ।
द्वारि स्थितस्य सरसाकुलबालिकायाः कर्णातिथीभवति मन्मनसूक्तिमुद्रा ९
एवं च प्राप्त एवैष शब्दः श्रोत्रेण गृह्यते ।
श्रोत्रस्यापि ततः सिद्धा निर्बाधा प्राप्यकारिता ॥ ९३ ॥

(टि०)-प्राप्यकारीत्यादि तत्रेति श्रवणे प्रस्तुतइति प्राच्यादिदिग्देश-लक्षणः मन्दंमन्दमित्यादि यथा रसनायामिति कोऽर्थः शर्करास्वादे रस-नाशब्दे किमेवं जानाति यदेषा शर्करा पूर्वदिशआगता तथेति दिग्देश-व्यपदेशप्रत्ययः अथानुमानेत्यादि तेषामिति परिमलादीनाम् हेतूनिति माधवीमण्डपादीनि निमित्तानि तद्व्यपदेशिनीति परिमलादिव्यपदेशिनी दिग्देशानामित्यादि श्रुतविषयतेति कर्णगोचरता एषामिति दिग्देशानां दिग्देशा अपि शब्दरूपा भवेयुः भिन्नेति अपरप्रमाणविषया येन प्रमाणेन न शब्दग्रहणं तेन न दिग्देशग्रहणं किंत्वपरेण ते इति दिग्देशाः विशिषन्तीति विशिष्टरूपं दर्शयन्ति गृह्यतइत्यादि सङ्गतिमिति सम्बन्धं विना अनु-गुणेति अनुकूलवायौ शब्दे धिषणेति बुद्धिः समुन्मिषेदिति उल्लसेत् अन्यथेति प्रतिकूलपवने सेति बुद्धिः ।

(पं०)—काननेइति देशव्यपदेशः । यदिति यस्मात् कारणात् । एतद्व्यपदेश-भाजमिति दिग्देशव्यपदेशाश्रितम् । प्राप्तप्रकाशमिति प्राप्तं सत्प्रकाशयति प्राप्य-कारीत्यर्थः । घ्राणं कर्तृ एतद्व्यपदेशभाजं मनीषां कुरुतइति योगः । उपवनेइति देशनिर्देशः वनभुवइति देशकथनम् । अथानुमानादित्यादिपरवाक्यम् । तेषामिति

गन्धादीनाम् । **हेतूनिति** माधवीमण्डपादीन् । **तादृगिति** दिग्देशव्यपदेशवती मनीषा न प्रवर्त्तते घ्राणतः स्पर्शनतश्च । **श्रोत्रेऽपि सर्वामिति** अत्राप्यनुमानादेवदिग्देशव्यपदेशवतीधीः प्रवर्त्तते न प्रत्यक्षरूपा **प्रतिबन्धामिति** प्रत्यक्षं हि शब्दोऽयमिति ज्ञात्वा कृतार्थं पश्चाच्छंखशब्दोऽयमिति या प्रतीतिर्भवति सा च प्रतिबन्धपूर्वकादनुमानादेव जायते यः किल शब्दो मया पूर्वमुपलब्धस्तत्सदृशोऽयं उपलभ्यमानः शब्दः सच शङ्खशब्दे आसीत् तस्मादनेन शङ्खशब्देन भाव्यम् । **तथैवेति** अनुमानादेव **प्रतिपत्तिरेषेति** दिग्देशव्यपदेशवती । **ध्वनिरूपत्वमिति** यो यः श्रुतिविषयः स स शब्दो यथा शङ्खशब्दः । **भिन्नप्रमितिविषयाइति** भिन्नानुमानलक्षणप्रमाणविषयाः । **ते इति** दिग्देशाः । **साधनेइति** दिग्देशव्यपदेशवत्वे । **सङ्गतिमिति** सम्बन्धम् । **अन्यथेति** प्रतिलोममारुते ध्वनौ । **निकटेऽपीत्यादि** यदि हीदमप्राप्यकारिस्यात्तदा मारुतकृतानुकूल्यापेक्षा न स्याद्यथा चक्षुषः **पटुघटितेत्यादि** पद्ये परो वक्ति । अपरार्द्धं सूरिवाक्यम् । **द्वारस्थितस्येति** कस्याचित्पुरुषस्य ।

अथास्य द्विविधस्यापि प्रकारान् प्रकटयन्ति ।

## मू०—एतद्द्वितयमवग्रहेहावायधारणाभेदादेकशश्चतुर्विकल्पमिति ।

अवग्रहश्चेहाचावायश्च धारणा च ताभिर्भेदो विशेषस्तस्मात् । प्रत्येकमिन्द्रियानिन्द्रियनिबन्धनप्रत्यक्षं चतुर्भेदमिति ।

अवग्रहादीनां स्वरूपं सूत्रचतुष्टयेन स्पष्टयन्ति ।

## मू०—विषयविषयिसन्निपातानन्तरसमुद्भूतसत्तामात्रगोचरदर्शनाज्जातमाद्यमवान्तरसमान्याकारविशिष्टवस्तुग्रहणमवग्रहइति ।

विषयः सामान्यविशेषात्मकोऽर्थो विषयी चक्षुरादिस्तयोः समीचीनो भ्रान्त्याद्यजनकत्वेनानुकूलो निपातो योग्यदेशाद्यवस्थानं तस्मादनन्तर-समुद्भूतमुत्पन्नं यत्सत्तामात्रगोचरं निःशेषविशेषवैमुख्येन सन्मात्रविषयं दर्शनं निराकारो बोधस्तस्माज्जातमाद्यं सत्त्वसामान्यादवान्तरैः सामान्याकारैर्मनुष्यत्वादिभिर्जातिविशेषैर्विशिष्टस्य वस्तुनो यद्ग्रहणं ज्ञानं तदवग्रहइति नाम्ना गीयते ।

## मू०—अवगृहीतार्थविशेषाऽकाङ्क्षणमीहेति ।

अवगृहीतोऽवग्रहेण विषयीकृतो योऽर्थोऽवान्तरमनुष्यत्वादिजाति-विशेषलक्षणस्तस्य विशेषः कर्णाटलाटादिभेदस्तस्याकांक्षणं भवितव्यता-प्रत्ययरूपतया ग्रहणाभिमुख्यमीहेत्यभिधीयते ।

## मू०—ईहितविशेषनिर्णयोऽवायइति ।

ईहितस्येहयाविषयीकृतस्य विशेषस्य कर्णाटलाटादेर्निर्णयो याथात्म्येनावधारणमवायइति कीर्त्यते ।

## मू०—सएवदृढतमावस्थापन्नो धारणेति ॥

स इत्यवायो दृढतमावस्थापन्नोविवक्षितविषयावसाय एव सादरस्य प्रमातुरत्यन्तोपचितः कञ्चित्कालं तिष्ठन् धारणेत्यभिधीयते। दृढतमावस्थापन्नो ह्यवायः स्वोपढौकितात्मशक्तिविशेषरूपसंस्कारद्वारेण कालान्तरे स्मरणं कर्तुं पर्याप्नोतीति ।

नन्वनिश्चयरूपत्वादीहायाः संशयस्वभावतैवेत्यारेकामपाकुर्वन्ति ।

## मू०-संशयपूर्वकत्वादीहायाः संशयाद्भेद इति

पुरुषावग्रहानान्तरं हि किमयं दाक्षिणात्य उतौदीच्य इत्यनेककोटि-परामर्शिसंशयस्ततोऽपि प्रमातुर्विशेषलिप्सायां दाक्षिणात्येनानेन भवितव्य-मित्येवमीहा जायतइति हेतुहेतुमद्भावात् तन्तुपटवद्व्यक्तमनयोः पृथक्त्वम्।

दर्शनादीनां कथंचिदव्यतिरेकेऽपि संज्ञाभेदं समर्थयन्ति ।

मू०—कथंचिदभेदेऽपि परिणामविशेषादेषां व्यपदेशभेदइति।

यद्यप्येकजीवद्रव्यतादात्म्येन द्रव्यार्थादेशादमीषामैक्यम् । तथापि पर्यायार्थादेशाद् भेदोऽपीति तदपेक्षया व्यपदेशभेदोऽपि सूपपादइति ।

अथामीषां भेदं भावयन्ति ।

मू.—असामस्त्येनाप्युत्पाद्यमानत्वेनाऽसङ्कीर्णस्वभावतया ऽनुभूयमानत्वादपूर्वापूर्ववस्तुपर्यायप्रकाशकत्वात् क्रमभावित्वाच्चैते व्यतिरिच्यन्त इति ॥

असङ्कीर्णस्वभावतया परस्परस्वरूपवैविक्त्येनानुभूयमानत्वाद्दर्शनादयो भिद्यन्ते । तथानुभवनमप्यमीषामसामस्त्येनाप्येकद्वित्र्यादिसंख्यतयोत्पद्यमानत्वादवसेयम् । तथाहि । प्रमातुर्विचित्रक्षयोपशमवशात् कदाचिद् दर्शनमेव कदाचिद्दर्शनावग्रहौ कदाचिद्दर्शनावग्रहसंशयादयः अपूर्वापूर्वक्रमेण समुन्मज्जन्तीति सिद्धमतोऽसङ्कीर्णत्वेनैव तेषामनुभवनम् अपूर्वापूर्ववस्तुपर्यायप्रकाशकत्वक्रमभावित्वेऽपि प्रत्यात्मवेद्य एवात्र प्रयोगाः पुनरेवम् । ये ऽसङ्कीर्णस्वभावतयाऽनुभूयन्ते अपूर्वापूर्ववस्तुपर्यायप्रकाशकाः क्रमभाविनो वा ते परस्परं व्यतिरिच्यन्ते यथा स्तम्भादयो ऽनुमानादयो ऽङ्कुरकन्दलकाण्डादयो वा तथा चैतइति ।

अथामीषां क्रमनियमार्थमाहुः ।

मू०—क्रमोप्यमीषामयमेव तथैव संवेदनादेवं

क्रमाविर्भूतनिजकर्म्मक्षयोपशमजन्यत्वाच्चेति ।

अयमेव दर्शनावग्रहादिरमीषां क्रमस्तेनैव क्रमेणानुभवाद्यदेव हि सन्मात्रमैक्षि तदेव वर्णाद्याकारेण केनचिदवाग्राहि तदनन्तरमनिर्द्धारितरूपतया सन्देहास्पदीचक्रे ततोऽपि नियताकारेणेहामासे। ततोऽपीहिताकारेण निरणायि पुनः कालान्तरे स्मृतिहेतुत्वेन धारयाञ्चक्रे इतिसर्वैरनुभूयते। दर्शनज्ञानावरणक्षयोपशमलक्षणकारणेनाप्येवमेव भूष्णुनाऽमीषामुत्पाद्यत्वाच्चायमेवक्रमः। क्रमोत्पदिष्णुना हि कारणेन क्रमेणैव स्वकार्यं जनयितव्यम्। यथा स्थासकोशकुशूलच्छत्रादिनेति ।

व्यतिरेके दोषमाहुः ॥

मू०–अन्यथा प्रमेयानवगतिप्रसङ्गइति ॥

अन्यथेति यथोक्तक्रमानभ्युपगमे प्रतीयमानक्रमापह्नवे हि दर्शनादीनां प्रमेयापह्नव एव कृतो भवतीति ।

उक्तमेवक्रमं व्यतिरेकद्वारा समर्थयन्ते ।

मू०–नखल्वदृष्टमवगृह्यते । नचानवगृहीतं सन्दिह्यते नचासन्दिग्धमीह्यते नचानीहितमवेयते नाप्यनवेतं धार्यतइति ॥

स्पष्टम् ।

क्वचिदेषां तथा क्रमानुपलक्षणे कारणमाहुः ।

मू०–क्वचित्क्रमस्यानुपलक्षणमेषामाशूत्पादादुत्पलपत्रशतव्यतिभेदक्रमवदिति ॥

क्वचिदित्यभ्यस्ते करतलादौ गोचरे । शेषं व्यक्तम् ।

पारमार्थिकप्रत्यक्षं लक्षयन्ति ।

**मू०—पारमार्थिकं पुनरुत्पत्तावात्ममात्रापेक्षमिति ॥**

क्षयक्षयोपशमविशेषविशिष्टमात्मद्रव्यमेवाव्यवहितं समाश्रित्य पारमार्थिकमेतदवध्यादिप्रत्यक्षमुन्मज्जति न पुनः सांव्यवहारिकमिवेन्द्रियादिव्यवहितमात्मद्रव्यमाश्रित्येति भावः ।

अस्य भेदावुपदिशन्ति ।

**मू०—तद्विकलं सकलं चेति ॥**

असम्पूर्णपदार्थपरिच्छेदकत्वाद्विकलम् । तद्विपरीतं तु सकलम् ।

विकलं भेदतो दर्शयन्ति ।

**मू०—तत्र विकलमवधिमनःपर्यायज्ञानरूपतया द्वेधेति ।**

सुगमम् ।

अवधिं लक्षयन्ति ।

**मू०—अवधिज्ञानावरणविलयविशेषसमुद्भवं भवगुणप्रत्ययं रूपिद्रव्यगोचरमवधिज्ञानमिति ॥**

अवधिज्ञानावरणस्य विलयविशेषः क्षयोपशमभेदस्तस्मात्समुद्भवति यत् । भवः सुरनारकजन्मलक्षणो गुणः सम्यग्दर्शनादिस्तौ प्रत्ययौ हेतू यस्य तत्तथा । तत्र भवप्रत्ययं सुरनारकाणाम् । गुणप्रत्ययं पुनर्नरतिरश्चाम् । रूपिद्रव्यगोचरं रूपिद्रव्याणि पृथिवीपाथःपावकपवनान्धकारच्छाया-

प्रभृतीनि तदालम्बनमवधिज्ञानं ज्ञेयम् । अत्र न्यायमार्गानुयायिनः सङ्गि-रन्ते। ननु पृथिव्यादीनां चतुर्णां सकर्णा वर्णयन्तु द्रव्यताम् । तिमिरच्छाय-योस्तु द्रव्यता वाचोयुक्तिर्युक्तिरिक्तैव भासामभावएव हि तमश्छाये गदतां सच्छाये । तथाहि शशधरदिनकरकरनिकरनिरन्तरप्रसरासम्भवे सर्वतोऽपि सति तमइति प्रतीयते । यदातु प्रतिनियतप्रदेशेनातपत्रा-दिना प्रतिबद्धस्तेजःपुञ्जो यत्र यत्र न संयुज्यते तदा तत्र तत्र च्छायेति प्रतीयते । प्रतिबन्धकाभावेतु स्वरूपेणालोकः समालोक्यत इत्यालोकाभाव एव तमश्छाये। यदि च तमो द्रव्यं भवेत् तदा रूपवद्द्रव्यसंस्पर्शाव्यभिचारात् स्पर्शवद्द्रव्यस्य च महतः प्रतिघातहेतुत्वात्तरलतरतुङ्गतङ्गत्तरङ्गपरम्परोपेत-पारावारावतार इव प्रथमजलधरधाराधोरणीधौताञ्जनगिरिगरीयः शृङ्ग-प्रतिवादिनीव निर्यन्निर्झरझात्कारिवारिदुर्वारशीकरासारसिच्यमानाभि-रामाराममहीरुहसमूहप्रतिछन्द इव च प्रवृत्ते तिमिरभरे सञ्चरतः पुंसः प्रतिबन्धः स्याद्भूगोलकस्येवचास्यावयवभूतानि खण्डावयविद्रव्याणि प्रतीयेरन्नेवं छायायामपीति कथं ते द्रव्ये भवेताम्। अत्राभिदध्महे। तमसस्ता-वदभावस्वभावतास्वीकृतिरानुभाविकी आनुमानिकी वा । न तावदा-नुभाविकी यतोऽभावानुभवो भावान्तरोपलम्भे सत्येव सम्भवी कुम्भाभा-वोपलम्भवत् न च प्रचुरतरतिमिरनिकरपरिकरितापवरकोदरे स्वकरतला-दिमात्रस्याप्युपलम्भः सम्भवति तत्कथं तदनुभूतिर्भवेत् । कथं वा प्रदीपादिप्रभाप्राग्भारप्रोज्जृम्भणमन्तेरणास्योपलम्भः कुम्भाद्यभावो हि तद्भावे एवानुभूयमानो दृष्टस्तत्कथमेष न्यायमुद्रातिक्रमो न कृतः स्यात् । अथ यो भावो यावता सामग्र्येण गृह्यते तदभावोऽपि तावतैव तेन । तदिहालोकस्य स्वातन्त्र्येणालोकान्तरमन्तरेणैव ग्रहणमालोकित-मिति । तदभावस्यापि तत्किं न स्यादिति चेत् । अहो पीतविषस्याप्य-ऽमृतोद्गारः । एवं वदता त्वयैव तमसि द्रव्यता व्याहारात् । किमिद-मीदृशमेवेन्द्रजालमिति चेत् इदमीदृशमिन्द्रजालमालोक्यताम् । आलोकः किल चक्षुषा संयोगाद्गृह्यते। यदि च तदभावस्यापि तत्सामग्र्येणैव ग्रहणं

स्यात् तदा तस्यापि ग्रहणे चक्षुः संयोगसद्भावादायाता द्रव्यतापत्तिः। संयोगस्य गुणत्वेन तद्वृत्तित्वात् । अथासंयुक्तोप्ययं प्रेक्ष्यते तदा कथं यो भावो यावतोत्पाद्यं मृषोद्यं न स्यात् । कथं वा चक्षुषः प्राप्यकारिता प्रवादः सूपपादः स्यात् । विशेषणविशेष्यभावसम्बन्धबन्धुरस्यान्धका-रस्य ग्रहणादयमदोषइति चेत् । कतमस्यैष विशेषणं न शरीरस्य तदन्यत्रापि प्रतिभासनात्। नापि भूतलकलशकुड्यादेस्तत एव। तर्हि भवतु नभसइति चेत्तदशस्यमेतस्य तद्विशेषणविशेष्यीभावेन कदाचिदप्रति-भासनात् । तन्नैतदभावतास्वीकृतिरानुभाविकी भव्या। नप्यानुमानिकी। यतः कतमोऽत्र हेतुराख्यायते सङ्ख्यावता । किं भाववैलक्षण्येन लक्ष्यमाणत्वम् । १ । भावविलक्षणसामग्रीसमुत्पाद्यत्व । २ । मसत्ये वा-लोके तत्प्रतिभासन।३। मालोकग्रहणसामग्र्या गृह्यमाणत्वम् ।४। तिमिर-द्रव्योत्पादककारणाऽभावो । ५ । द्रव्यगुणकर्म्मातिरिक्तकार्यत्व । ६ । मालोकविरोधित्वं । ७ । भावरूपताप्रसाधकप्रमाणाभावो वे । ८ । त्यष्टपक्षीराक्षसीव त्वत्पक्षभक्ष्यभक्षणविचक्षणोपतिष्ठते । तत्र न तावताद्यः पक्षः क्षेमङ्करः। कुम्भोऽयं स्तम्भोयमिति हि यथा कुम्भादयो भावा विधिमु-खेन प्रत्यक्षेण प्रेक्ष्यन्ते । तथेदं तमइति तमोऽपि । अभावरूपतायां तस्य प्रतिषेधमुखेन प्रत्ययः प्रादुःष्यात् । यथा कुम्भोऽत्र नास्तीति । ननु नाश-प्रध्वंसादिप्रत्यया विधिमुखेनापि प्रवर्त्तमाना दृश्यन्ते । नैवं नाशादि-शब्दानामेव भावप्रतिषेधाभिधायकत्वात् । अतएव हि कुम्भस्य प्रध्वंस इति सोपपदानामेषां प्रयोगोपपत्तिः यदितु तमः प्रभृतिशब्दाअपि तत्समानार्थतामाबिभ्रीरंस्तदानीं कुम्भस्याभाव इति वदालोकस्य तमइत्यपि प्रोच्येत । नचैवं कश्चिद्विपश्चिदपि प्रवक्ति । अथालोकाभावे संकेतितस्तमः शब्दो नाभावमात्रे ततो न तथा व्यपदेशइतिचेन्नैवं यदिह्यन्धकाररूपोऽभावोऽपि विधिमुखेन वीक्ष्येत तदानीं किमन्यदेतस्य भाववैलक्षण्येन लक्ष्यमाणत्वं स्याद्यतो हेतुसिद्धिर्भवेत् । १ । अथ भाव-विलक्षणसामग्रीसमुत्पाद्यत्वं हेतुस्तथाहि समवाय्यऽसमवायिनिमित्त-

कारणकलापव्यापाररूपाभावोत्पादिकासामग्री नैव तमसीयं समगंस्त तदशस्तम् । यतः किमिदं समवायिकारणनाम्ना त्वमाम्नासीः । यत्र कार्यं समवेतमुत्पद्यते तदिति चेत् तदसम्यक् समवायस्य निरन्तरसुहृद्गोष्ठीषु गौरवार्हत्वात् तत्प्रसाधकत्वाभिमतस्येह तन्तुषु पट इत्यादि प्रत्ययस्याप्रसिद्धेः पटे तन्तव इत्यादिरूपस्याबालगोपालं प्रतीतत्वात् सिद्धौ वा इह भूतले घटाभाव इत्यभावप्रत्ययेन व्यभिचारात् सम्बन्धमात्रपूर्वता प्रसाधने सिद्धसाधनादविष्वग्भावमात्रनिमित्ततया तदङ्गीकारात् । एकान्तैकस्वरूपत्वेन चाऽस्यैकवस्तुसमवायसम्भवे समस्तवस्तुसमवायस्य विनश्यदेकवस्तुसमवायाभावे समस्तवस्तुसमवायाभावस्य वा प्रसङ्गात् । तत्तदवच्छेदकभेदात्तदुपपत्तौ तस्यापि कथञ्चिद्भेदापत्तेरनेकपुरुषावच्छिन्नपर्षदादेरपि तावत्स्वभावभावेन कथं चिद्भेदात्। अप्रच्युतानुत्पन्नस्थिरैकरूपतया चास्याकाशसामान्याद्येतादृग्वस्तुसमाश्रितत्वमेव भवेन्न तु कार्यवस्तुसमाश्रितत्वम् । तत्तत्सहकारिकारणकलापोपनिपातप्रभावात कार्यसमवायस्वीकारोऽपि सनिकारस्तत्स्वभावप्रभावप्रतिबद्धानां तेषामपि सदा सन्निधानप्रधानत्वात तथा चास्तमिता समवायिकारणकिंवदन्ती तदसत्वे किमसमवायिकारणं समवायिकारणप्रत्यासन्नत्वं हि तल्लक्षणं तदसत्वे कथमेतत्स्यात् । तथाच तच्छेषभूतस्य निमित्तकारणस्यापि का व्यवस्था। सन्तु वा कारणान्यमूनि तथापि यथाकथंचिदालोककलापस्योत्पादस्तथा तमसोऽपि भविष्यति किमरुचिविरचनाभिर्व्यपासितुं शक्यते। किमस्योत्पादकमिति चेदालोकस्य किमिति वाच्यम्। तेजोऽणव इति चेदस्यापि तमोऽणव एव सन्तु सिद्धास्तावत्तैजसास्तेऽविवादेन वादिप्रतिवादिनोरिति चेत् तामसा अपि तद्वदेव किं न सेत्स्यन्तीति त्यज्यतामाग्रहः । २ असत्येवालोके तत्प्रतिभासनमप्यसम्यक् नहि यस्मिन्नसत्येव यत्प्रतिभासते तत्तदभावमात्रमेव भवति असत्येव व्यवधाने प्रतिभासमानैर्घटादिभिर्व्यभिचारात् । कथंचनैव प्रतिबन्धके असत्येव समुत्पद्यमानस्य स्फोटस्यापि तदभावमात्रता स्यात् । अथ

स्फोटोदाहकात्मकतया स्पार्शनप्रत्यक्षेणानुभूयते ! अभावमात्रतायां हि तस्य नेयमौपपत्तिकी स्यात् तर्हि तमोऽपि शैत्येन तेनैव प्रत्यक्षेण प्रेक्ष्यमाणं कथमभावस्वभावं भवेत् । ३ अथालोकग्रहणसामाग्र्या गृह्यमाणत्वं हेतुस्तथा च शङ्करन्यायभूषणो यो हि भावो यावत्या सामग्र्या गृह्यते तदभावोऽपि तावत्यैवेत्यालोकग्रहणसामग्र्या गृह्यमाणन्तमस्तदभाव एवेति तदपि न किञ्चित्। तमो ग्रहणसामग्र्या गृह्यमाणस्यालोकस्यैव तदभावताप्रसङ्गेनानैकान्तिकत्वात् । घटपटयोर्वा समानग्रहणसामग्रीकतया परस्पराभावत्वप्रसङ्गात् ४ ।

(टि०)-तदनुभूतिरिति अभावानुभवः अस्योपलम्भइति अभावस्योपलब्धिः तद्भावइति प्रदीपप्रभाप्राग्भारप्रोज्जृम्भणएव तावतैव तेनेति सामर्थ्येण तदभावस्यापीति आलोकाभावस्यापि तदिति भावान्तरोपलम्भमन्तरेण प्रदीपाद्यालोकाद्विना वा ग्रहणम् आलोकः किलेत्यादि तदभावस्यापीति आलोकाभावस्यापि तत्साग्र्येणेति आलोकसामग्र्या तस्यापीति आलोकाभावस्यापि तद्वृत्तत्वादिति द्रव्यवृत्तित्वात् संयोगस्तावद्गुणः गुणाश्रयो द्रव्यमिति भवतापि स्वीकारात् तमसश्चक्षुःसंयोगग्रहणे बलाद्द्रव्यतासमायाता अथासंयुक्तेत्यादि अयमित्यालोकाभावः कतमस्येति नगनगरसागरागुरुकुरङ्गतुरङ्गतरङ्गसारङ्गमातङ्गादि स्थावरत्रसषड्विधजीवनिकाये स्फुरति सति तन्मध्ये कस्य एषइत्यन्धकारः तदन्यत्रेति शरीरव्यतिरेकेऽपि तत एवेति तदन्यत्रापि प्रतिभासनादिति हेतोरेव एतस्येत्यन्धकारस्य तद्विशेषणेति नभोविशेषणम् एतदभावतेति एतस्य तमसः अभावताया आलोकाभावत्वस्य स्वीकारः सनिकारः यतः कतमइत्यादि संख्यावतेति संख्यावद्भिर्बुज्जनमान्येनेत्युपहासवाक्यम् अभावेत्यादि तस्येति तमसः पदार्थस्य वा ननु नाशेति नाशप्रध्वंसादि प्रत्यया हि अभावस्वभावाः तथापि घटस्य नाशोऽयं विधिमुखेनापि प्रत्ययप्रतीतिः प्रोज्जृम्भेत कोऽर्थः तमोऽपि इदं तमइति विधिमुखेन प्रत्यक्षेण प्रेक्ष्यते तस्म

न्नाभावस्तमः एषामिति नाशप्रध्वंसादीनां तत्समानार्थतामिति नाश-प्रध्वंसादिसाम्यं अथालोकेत्यादि तथेत्यालोकस्य तमः यदिसामान्येना-भावे तमः शब्दः सङ्केतितः स्यात्तदा घटाद्यभावप्रचुरतया तमोबाहुल्याप-सारणाय आलोकस्य तम इति प्रोच्येत अत्र तु न तथा आलोकाभाव एव सङ्केतितत्वात् तमःशब्दस्य एतस्येत्यभावस्य यतइति भाववैलक्षण्येन लक्ष्यमाणत्वात् समवायीत्यादि त्रिधाकारणं यत्राहि कार्यं समवैति तत्समवायिकारणं यथा द्व्यणुकस्याणुद्वयं यच्चकार्यैकार्थसमवेतङ्कार्यैकारणै-कार्थसमवेतं वा कार्यमुत्पादयति तदसमवायिकारणं यथा पटावयवि-द्रव्यारम्भे तन्तुसंयोगः पटसमवेतरूपाद्यारम्भे पटोत्पादकतन्तुरूपादि च शेषं तूत्पादकं निमित्तकारणं यथा पटाकाशादि प्रतिषेधाभिधायकत्वादेव यतोभावोपि विधिमुखेन वीक्ष्यते ऽभावोपि तत्कथं हेतुर्घटते भाववैलक्ष-ण्येनेत्यादि एतदेव हि भावलक्षणं यद्विधिमुखेन प्रेक्षणं इयमिति कारण-त्रयरूपासामग्री यत्रकार्यमिति यत्रेति मृत्तिकादिके वस्तुनि कार्यं घटादि समवेतमिति सम्बद्धं तादिति समवायिकारणं तत्प्रसाधकत्वेति समवाय-प्रसाधकत्वेनाभीष्टस्य कारणे कार्यस्य समवेतत्वात्समवायः सच्छायः कार्यंतु पटादौ कारणं तन्त्वादि समवेतं प्रसिद्धमतः समवायः निश्राय-विच्छायताम् सम्बन्धमात्रेति तन्तूनन्तरेण पटः मृत्तिकामन्तरेण घटो न स्यात् इति सम्बन्धमात्राङ्गीकारे सिद्धं साधनं कारणोत्पद्यमानत्वं तस्मान्न-समवायस्वीकारे अविष्वग्भाविति तादात्म्यकारणतया तदङ्गीकारादिति सम्बन्धस्वीकारात् एकान्तैकेति एकान्तेनैकस्वभावत्वेन अस्येति समवा-यस्य तत्तदवच्छेदेनेति तेषां तेषामवच्छेदकानां घटादीनां भेदात् तदुप-पत्ताविति भेदोपपत्तौ तस्यापीति समवायस्यापि अप्रच्युतेत्यादि अस्येति समवायस्य एतादृगित्येतादृग् अप्रच्युतानुत्पन्नस्थिरैकस्वभावं वस्तु तत्तत्स-हकारीति तानि कार्यं प्रति भिन्नानि सहकारीणि दण्डचक्रचीवरदोरकादीनि तुरीवेमप्रभृतीनि च तेषां कलापः समूहस्तत्सामग्र्यवशात् यथाकाशस्यापि अवच्छेदकभेदान्नानात्वं घटाकाशं पटाकाशमित्येव समवायस्यापि नाना-त्वम् कार्येति कार्येषु सविकारइति सविगोपकः तत्स्वभावेति तस्य सम-

वायस्य स्वभावोऽप्रच्युतानुत्पन्नस्थिरैकलक्षणः तेषामिति सहकारिणामपि तदसत्त्वइति समवायिकारणाभावे तल्लक्षणमिति असमवायिलक्षणम् तदसत्त्वइति असमवायिकारणलक्षणाभावे एतदिति असमवायिकारणं तच्छेषभूतस्येति समवाय्यसमवायिशेषरूपस्य किमस्येत्यादि अस्येति तमसः अस्यापीति तमसोपि तेइति परमाणवः तद्वदेवेति तैजसपरमाणुवत् व्यवधाने इति कुड्यादिके प्रतिबन्धके इति मन्त्रादिके स्फोटस्यापीति न केवलं घटादेः तदभावेति प्रतिबन्धकाभावमात्रत्वं तस्येति स्फोटस्य इयमिति दाहात्मकता तेनैवेति स्पार्शनेनैव तदभावतेति तमोभाव आलोकइतिप्रसङ्गसङ्गतेः।

(पं.)-रूपवद्द्रव्यस्य स्पर्शाव्यभिचारादिति अरूपिद्रव्याणां दिक्कालादीनां परिगणितत्वेन तमसस्तेष्वसम्भवात् पारिशेष्याद्रूपवद्द्रव्यं सम्भवति। एवं छायायामपीति। तुल्ययोगक्षेमत्वात्। स्वातन्त्र्येणेति भावान्तरनिरपेक्षत्वेन। अयमिति अभावः। अन्धकारस्य ग्रहणादित्यत्र अन्धकारस्येत्यभावस्तस्य कोभावः आलोकाभावविशिष्टा इतरपदार्था गृह्यन्ते इति भावः। तदन्यत्रापीति नहि केवले एव शरीरे तमः प्रतिभाति। किन्त्वन्येषु घटादिष्वपि ततएवेति तदन्यत्रापि प्रतिभासनात्। एतस्येति अभावस्य तद्विशेषणविशेष्यीभावेनेति तेन तमसा विशेषणविशेष्यीभावस्तेन। अभावोहि नभोविशेषणविशेष्यीभावेन कदाचनापि न प्रतिभासते। तमोऽपीति कोर्थः। तमोऽपि इदं तमइति विधिमुखेन प्रत्यक्षेण प्रेक्ष्यते तस्मान्नाभावस्तमः। अत एव प्रतिषेधाभिधायकत्वादेव। सोपपदानामेषां प्रयोगोपपत्तिरिति। अत एव शुद्धशब्दवाच्यत्वाद्वस्तुरूपं तमः न तथा व्यपदेश इति किन्तु प्रतिषेधमुखेन व्यपदेशः। अन्धकाररूपोऽभावोऽपीति गद्ये एतदेव हि भावलक्षणं यद्विधिमुखेन प्रेक्षणम्। तदानीमिति गद्ये एतस्येति तमसः कोऽर्थः उपहासोऽयं यदिहि विधिमुखेन प्रत्ययेन लक्ष्यमाणोऽप्यन्धकारो भाववैलक्षण्येन लक्ष्यते इति त्वयोच्यते। तदाकिमपरं भावलक्षणं स्यादिति यावत्। तदुपपत्ताविति यथाकाशस्यापि अवच्छेदकभेदान्नानात्वं घटाकाशं पटाकाशमिति। एवं समवायस्यापि नानात्वम्। तावत्स्वभावभावेनेति यवान्तोऽवच्छेदकास्तावद्वाभेदप्रसक्तिः। एतादृग्वस्तुसमाश्रितत्वमेवेति आकाशसामान्यादीनि। एतादृशि यानि

वस्तूनि एतत्सदृशानि नित्यानि तत्समाश्रितत्वम्। **तत्सहकारिकारणेति** नहि कील-कास्थितास्तन्तवः पटस्य कारणम् भवन्ति। **तत्स्वभावप्रभावप्रतिबद्धानां** तत्तत्सह-कारिकारणकलापस्वभावप्रभावप्रतिबद्धानाम्। **समवायिकारणप्रत्यासन्नत्वमिति** अवधृतसामर्थ्यंह्यसमवायिकारणम्। **इयमिति** दाहात्मकता।

(रत्ना०)–अथ तिमिरद्रव्योत्पादककारणाभावो हेतुः तथा च श्रीधर-स्तमःपरमाणवः स्पर्शवन्तस्तद्रहिता वा। न तावत्स्पर्शवन्तः स्पर्शवत-स्तत्कार्यद्रव्यस्य क्वचिदप्यनुपलम्भात्। अदृष्टव्यापाराभावात् स्पर्शवत्कार्य-द्रव्या नारम्भका इति चेत्। रूपवन्तोवायुपरमाणवो ऽदृष्टव्यापारवैगु-ण्याद् रूपवत्कार्यं नारभन्ते इति किन्न कल्प्येत किंवा न कल्पितमेक-जातीयादेव परमाणोरदृष्टोपग्रहाच्चतुर्द्धाकार्याणि जायन्तइति कार्यैक-समधिगम्याः परमाणवो यथा कार्यमुन्नीयन्ते न तद्विलक्षणाः प्रमाणा-भावादिति चेत्। एवं तर्हि तामसाः परमाणवोप्यस्पर्शवन्तः कल्पनी-याः तादृशाश्च कथं तमोद्रव्यमारभेरन्। अस्पर्शवत्त्वस्य कार्यद्रव्या-नारम्भकत्वेन व्यभिचारोपलम्भात्। कार्यदर्शनात् तदनुगुणं कारणं कल्प्येत नतुकारणवैकल्येन दृष्टकार्यविपर्यासो युज्यतइति चेन्न वयमन्ध-कारस्य प्रत्यर्थिनः किंत्वारम्भानुपपत्तेर्नीलिममात्रप्रतीतेश्च द्रव्यमिदं न भवतीति ब्रूमइति नैतदुपपत्तिपदवीं प्रतिपद्यते। यतः स्पर्शवन्त एव तामसाः परमाणवः प्रोच्यन्ते यत्पुनस्तत्रोपादेशि स्पर्शवतस्तत्कार्यस्य क्वचिदप्यनुलम्भादिति। तदसत्यं शीतस्पर्शवतस्तमोद्रव्यस्यैव तत्कार्यस्य दर्शनात्। तत्र स्पर्शसद्भावे किंप्रमाणमिति चेत् तदभावे किंप्रमाणमिति वाच्यम्। नहि तत्प्रतिषेधकप्रमाणमन्तरेणास्पर्शवत्वात् कार्यद्रव्यानारम्भ-स्त्वया प्रसाधयितुं शक्यते अस्माकं तु तद्भावे प्रमाणाभावेऽपि तावन्न काचित्क्षतिः। नच नास्त्येव तत प्रत्यक्षस्यैव सद्भावात् तथाहि दिवादि-वाकरकरालातपप्रपातोपतप्तवपुषः पथिकास्तमिस्रासन्तमसशैत्यसम्पर्कात् प्रमोदन्ते न च तापाभावमात्रसूचित एव तेषां प्रमोदः प्रतीतिबाधात् तन्मात्रनिमित्तोहि घटोऽत्र नास्तीति वत् तापः सम्प्रति नास्तीति प्रतिषेध-

मुखएव प्रत्ययः प्रादुःष्यान्नतु सम्प्रति शीतलीभूतं मे शरीरमिति विधिमुखः । तथात्वेहि तमो भावमात्रसूचित एवायमालोकप्रत्यय इत्यपि वावदूकस्य वदतो वदनं न वक्रीभवेत् ।

(टि०)—तथाच श्रीधरः कन्दलीकारः तद्रहिताइति स्पर्शवियुक्तः तत्कार्येति परमाणुद्रव्यकार्यस्य रूपवन्त इति वायुपरमाणवामूर्त्ता- अपि कर्म्मवशात्कार्यं नारभेरन्तिति कल्प्यतां ते स्वभावेन कार्यमना- रभमाणास्तिष्ठान्ति एकजातीयादिति रसाणोरूपाणोर्वा चतुर्द्धेति पृथ्व्यप्ते जोवायुरूपतया कार्यैकेति कार्येण घटादिना एकेनरूपाणवो रसाणवो वा- समधिगम्यन्ते ते रसेहि रसाणवएव तेजसि तेजोणवएव तद्विलक्षणाइति रसे रसाणोर्विलक्षणास्तेजोणवो नेक्ष्यन्ते एवमित्यादि ताद्दशः परस्परम- सम्बद्धाः अस्पर्शवत्वस्येति असंयोगवतः शीतस्पर्शेत्यादि तत्कार्यस्येति तमः कार्यस्य तत्रेति तमसि तदभावे इति स्पर्शाभावे तत्प्रतिषेधकेति स्पर्शनिषेधकं विना तत्सद्भावे इति शीतस्पर्शसद्भावे तदिति प्रमाणं तेषामिति पथिकानां तन्मात्रेत्यभावमात्रहेतुः तथात्वे इति अभावस्य विधिमुखप्रत्ययसद्भावे ।

(पं०)—अदृष्टव्यापाराभावादिति अदृष्टं हि सर्वोत्पत्तिमतां निमित्तम् । चतुर्द्धाकार्याणीति पार्थिवादीनि । परवाक्यं कार्यैकेत्यादि ।

(रत्ना०)-अथान्धकारनिबन्धत्वे शैत्यस्पर्शप्रत्ययस्य निबिडतर- घटितकपाटसम्पुटे गवलकुवलयकलकण्ठीकण्ठकाण्डकृष्णान्धकारैकार्ण- वीभूते कारागारे क्षिप्तस्य पुंसः सुतरां तत्प्रत्ययो भवेदिति चेत तापा- भावनिमित्ततायामपि सुतरां स किं तत्र न स्यात्तत्रात्यन्तं तापाभाव- सम्भवात् । तस्मान्मन्दमन्दसमीरलहरिपरिचय एव जलस्पर्शस्येव तत् स्पर्शस्याप्यभिव्यक्तौ हेतुर्न चासौ तत्रास्तीति न तत्र तत्प्रतीतिः प्रादु- र्भवति । अनुमानतोऽपि तत्र स्पर्शप्रतीतिः । तथाहि तमःस्पर्शवद्रूप- वत्वात् पृथ्वीवत् । नचरूपवत्त्वमसिद्धमन्धकारः कृष्णोऽयमिति कृष्णा- कारप्रतिभासात् । ननु यदि तिमिरं श्यामरूपपरिकलितकलेवरं स्यात्

तदावश्यं स्वप्रतिभासे आलोकमपेक्षेत कुवलयकोकिलतमालादिकृष्ण-वस्तूनामालोकापेक्षवीक्षणत्वादिति चेत्तन्नाकलङ्कम्। उलूकादीनामालोक-मन्तरेणापि तत्प्रतिभासात्। अथास्मदादिप्रतिभासमपेक्ष्यैतदुच्यते। तदपि न पेशलम्। यतो यद्यपि कुवलयादिकमालोकमन्तरेणालोकयितुं न शक्यते स्मदादिभिस्तथापि तिमिरमालोकयिष्यते विचित्रत्वाद्भावा-नामितरथा पीतावदातादयोऽपि तपनीयमुक्ताफलप्रमुखा नालोकनिर-पेक्षवीक्षणा इति प्रदीपचन्द्रादयोऽपि प्रकाशान्तरमपेक्षेरन्निति सिद्धं तमोरूपवत्। तथा तमोरूपवत्काष्णर्यवत्वेन प्रतीयमानत्वात्कुवलयवदि-त्यतोपि तत्र रूपवत्त्वसिद्धिः। नखलुरूपं कुम्भाभावादि कृष्णाद्याकारेण कदाचित्प्रतीयमानमालोकितमिति रूपवत्त्वसिद्धौ च सिद्धं स्पर्शवत्त्वम्। तथा च तामसपरमाणूनां कार्यद्रव्यारम्भप्रतिषेधोपन्यस्तमस्पर्शवत्त्वं स्वरूपासिद्धं परस्य तामसपरमाणूनामप्रसिद्धेराश्रयासिद्धं चेति स्थितम्५। द्रव्यगुणकर्म्मातिरिक्तकार्यत्वमपि नहेतुर्द्रव्यातिरिक्तकार्यत्वस्य तस्मिन्न-सिद्धत्वेनैकदेशासिद्धतापत्तेः। तत्प्रसिद्धिर्हि तस्याभावरूपतयान्यतो वा कुतोप्यभिधीयते नाद्यः पक्षः परस्पराश्रयप्रसंगात् अभावरूपता-सिद्धौ हि तस्य द्रव्यातिरिक्तकार्यत्वसिद्धिस्ततोऽपि सेति। अन्यहेतु-तस्तत्सिद्धौतु स एवास्तु किमनेन सिद्धोपस्थायिना कृतकभक्तिभृत्येनेव कर्त्तव्यम्। ६। आलोकविरोधित्वमपि न साधीयः। नहि योयद्विरोधी स तदभावस्वभाव एव वारिवैश्वानरयोः परस्पराभावमात्रतापत्तेः। अथ सहानवस्थानलक्षणो विरोधस्तिमिरस्याभावस्वभावतासिद्धौ साधन-त्वेनाभिप्रेतो नवध्यघातकभावः। सचभावाभावयोरेव सम्भवी न पुनर्द्वयोरपि भावयोस्तदिहालोकानवकाशे सत्येव समुज्जृम्भमाणस्यान्ध-कारस्य अभावरूपतैव श्रेयसी कुम्भाभाववदिति चेत्। तदपवित्र मत्रापि वध्यघातकभावस्यैव भावात् घनतरतिमिरपूरिते पथि प्रसर्प्पता प्रदीपप्रभाप्राग्भारेण तिमिरनिकुरम्बाडम्बरविडम्बनात्।७। भावरूपता प्रसाधकप्रमाणाभावोप्यसिद्धः। तत्प्रसाधकानुमानसद्भावात् तथाहि

भावरूपं तमोघनतरनिकरलहरिप्रमुखशब्दैर्व्यपदिश्यमानत्वादालोकवत् । नचासिद्धिः साधनस्य । तथाहि । रहः सङ्केतस्थो घनतरतमः पुञ्जपिहिते वृथोन्मेषं चक्षुर्मुहुरुपदधानः पथिपथि खटत्कारादल्पादपि निभृतसम्प्राप्तरमणीभ्रमद्भ्राम्यद्बाहुर्दमदमिकयोत्ताम्यति युवा । १ । पर्यस्तोदिवसस्तटीमयमटत्यस्ताचलस्यांशुमान् सम्प्रत्यंकुरितान्धकारनिकरैर्लम्बालकाद्यौरभूत् । एह्यन्तर्विंशवेश्मनः प्रियसखि द्वारस्थलीतोरणस्तम्भालम्बितबाहुवल्लि रुदती किं त्वं पथः पश्यसि ।२। तिमिरलहरीगुर्वीमुर्वीं करोतु विकस्वराम्। हरतु नितरां निद्रामुद्रां क्षणात् गुणिनां गणात् तदपि तरणे तेजःपुञ्जः प्रियो न ममैष ते किमपि तिरयन् ज्योतिश्चक्रं स्वजातिविराजितम् । ३ । औपचारिकएवायं तत्र तद्व्यपदेश इति चेत् । नैवमेतदभावरूपताप्रसिद्धिं विना घनतरादिव्यपदेशस्य भावरूपमुख्यार्थबाधाविरहेण तस्यौपचारिकत्वाऽयोगात् । तथात्वेपि वा तस्य तमसोभावरूपतैव प्रसिद्ध्यति नखलुकुम्भाद्यभावस्तथप्रकारोपचारगोचरचारितामास्तिघ्नुते । तत्र सादृश्याद्युपचारकारणाभावात् । तथा नाभावरूपं तमः प्रागभावाद्यस्वभावत्वाद्योमवत् । नचायमपि हेतुरसिद्धस्तथाह्यालोकस्य प्रागभावः । प्रध्वंसाभाव इतरेतराभावोऽत्यन्ताभावो वा तमोभवेत् । आद्यएकस्यानेकस्य वायं तत्स्यात् । न तावदेकस्यालोकस्य प्रागभावस्तमः प्रदीपालोकेनेव प्रभाकरालोकेनापि तस्य निवर्त्त्यमानत्वात् । यस्य हि यः प्रागभावः सतेनैव निवर्त्यते । यथा पटप्रागभावः पटेनैव । नाप्यनेकस्यैकेन निवर्त्त्यमानत्वात्पटप्रागभाववदेव । नच वाच्यं प्रत्यालोकं स्वस्वनिवर्त्तनीयस्य तमसोभेदात्प्रदीपादिना निवर्त्तितेऽपि तमोविशेषे पूषादिनिवर्त्तनीयं तमोऽन्तरं तदभावान्ननिवर्त्तत इत्येकेन निवर्त्त्यमानत्वादिति हेतुरसिद्ध इति प्रदीपादिनिवर्त्तिततमसि प्रदेशे दिनकरादिनिवर्त्तनीयस्य तमोन्तरस्योपलब्धिलक्षणप्राप्तस्यानुपलब्धेः सम्प्रतिपन्नवत् । यदिचेदं प्रागभावस्वभावं स्यात्तदा प्रदीपप्रभाप्रबन्धप्रध्वंसे ऽस्योत्पत्तिर्नस्यादना-

दित्वात्प्रागभावस्य नाप्यालोकस्य प्रध्वंसाभावस्तमो निवर्त्त्यमानत्वात् तस्यैव प्रागभाववत् । नापीतरेतराभावस्तस्य प्रसृतेऽपि प्रचण्डे मार्त्तण्डीये तेजसि सद्भावेन तामिस्रायामिव वासरेऽपि तमःप्रतीतिप्रसङ्गात् । नाप्यालोकस्यात्यन्ताभावस्तमस्तस्य स्वकारणकलापोपनिपातकाले समुत्पद्यमानत्वादिति पक्षाऽष्टकेनाप्यघटमानत्वान् नानुमानिक्यपि तमसोऽभावरूपतास्वीकृतिः ॥ एतत्सकलमपि प्रायेण छायायामपि समानमिति यथासम्भवं योज्यं विशेषतश्चैतद्द्रव्यताप्रासिद्धिः परिपाटिप्राप्तस्याद्वादरत्नाकरादवधारणीया । यत्पुनरवाचि तमसि सञ्चरतः पुंसः प्रतिबन्धस्यादित्यादि तदखिलमालोकेऽपि समानमिति स एव प्रतिविधास्यतीति किमतिप्रयत्नेन । तत्रास्माकमिति सिद्धे तमश्छाये द्रव्ये ।

(टि०)–कारागारइति तत्रात्यन्तं घर्मसम्भवात् तत्प्रत्ययइति शैत्यप्रत्ययः अन्धकारनिबन्धनाच्छीतत्वस्य स इति तापाभावः तत्रेति कारागारे तत्स्पर्शस्येति तमःस्पर्शस्यापि अभिव्यक्ताविति प्रकटने असाविति मन्दमन्दसमीरलहरिपरिचयः तत्रेति कारागारे तत्प्रतीतिरिति शीतस्पर्शप्रतीतिः उलूकादीनामित्यादि तत्प्रतिभेति तमःप्रतिभानात् इतरथेति यदि भाववैचित्र्यं नाभिमतम् परस्येति शैवस्य तामसेति स्पर्शवत्त्वं क्ववर्त्ततां वराकं आश्रयस्याऽसिद्धेः द्रव्यातिरिक्तेत्यादि तस्मिन्निति तमसि तत्प्रसिद्धिरिति द्रव्यगुणकर्म्मातिरिक्तकार्यत्वसिद्धिः तस्येति तमसः तत्सिद्धाविति द्रव्यादिहेतुसिद्धौ स एवेति अन्यएवहेतुः अनेनेति द्रव्यगुणकर्म्मातिरिक्तकार्यहेतुना अथ सहेत्यादि सचेति वध्यघातकभावः तत्प्रसाधकेति तमसो भावप्रसाधकस्य अनुमानस्य सम्भवात् नैवमेतादित्यादि एतदभावेति तिमिराभावरूपता नहि तमसोऽवयमभावरूपतां प्रतिपद्यामहे तस्येति तद्व्यपदेशस्य घनतरादिरूपस्य तथात्वेऽपीति व्यपदेशोपचारयोगेऽपि नखलुकुम्भादीति भावस्य भावउपचारो भवति नत्वभावे यथाग्निर्माणवकः तथा प्रकारेति घनतरादिव्यपदेशप्रकारः तत्रेति अभावे नतावदित्यादि तस्येति तमसः नाप्यनेकस्येति अनेकस्यालोकस्य प्रागभावस्तम-

इति पाश्चात्येन सम्बन्धः तदातदभावादिति रात्रौ सूर्याभावात् यदि चेद-मित्यादि इदमिति तमः प्रागभावेति क्षीरे दध्यादि यन्नास्ति प्रागभावः स उच्यते अस्येति तमसः प्रागभावोह्यनादिः सान्तश्च नाप्यालोकस्येति नास्तिता पयसो दध्नि प्रध्वंसाभावलक्षणम् निवर्त्यमानत्वादिति आलोके-नेति शेषः यद्यालोकस्य प्रध्वंसाभाव एव तमः तदाऽऽलोकनिवर्त्यं न स्यात् तत्पूर्वमसत्वात् अत्रापि प्रागभावप्रसङ्गात् तस्येति आलोकस्य गवि योऽश्वाद्यभावस्तु सोऽन्योन्याभाव उच्यते नाप्यालोकस्येति तमसः शिरसोऽवयवा निम्ना वृद्धिकाठिन्यवर्जिताः शशशृङ्गादिरूपेण सोऽत्यन्ता-भावउच्यते॥१॥ निवर्त्तिततमइव ऽनिवर्त्तितमपि तमो न दृश्यते दृश्यमान-स्येत्यर्थः तमसःप्रागभावोह्यनादिः सान्तश्चः आलोकेनेति शेषः आलोक-स्य यथा प्रागभावो निवर्त्यमानत्वात्प्रध्वंसाभावो न स्यात् योऽत्यन्ताभावो भवति स कदाचिन्न विवर्त्तते।

(पं०)—तत्प्रतिभासादिति कृष्णवस्तुप्रतिभासात्। प्रतिषेधोपन्यस्तमिति प्रतिषेधायोपन्यस्तम्। अस्पर्शवत्वं स्वरूपासिद्धमिति अस्पर्शवत्त्वस्य साधकप्रमाणा-भावात् यद्यत्र न भवति तत्तत्र स्वरूपासिद्धम् यथा अनित्यः शब्दः चाक्षुषत्वादिति एवं पर-माणुष्वस्पर्शवत्त्वम्। परस्येति भवतः। आश्रयासिद्धमिति अस्पर्शवत्त्वं साधनम् तस्मिन्निति तमसि। तत्प्रसिद्धिरिति द्रव्यातिरिक्तकार्यत्वप्रसिद्धिः। तत्सिद्धा-विति द्रव्यातिरिक्तकार्यत्वासिद्धौ स एवास्त्विति तमसोऽभावत्वसाधनाय अने-नेति द्रव्यातिरिक्तकार्यत्वेन। वृथोन्मेषमिति वृथोन्मेषो यत्र तत्तथा। द्रुमदमिकयेति औत्सुक्येन। तत्रेति अभावरूपे तमसि। तथात्वे इति औपचारिकत्वे। तथा-प्रकारोपचारादिति गद्ये घनतरादयस्तथा प्रकारा उपचारा ज्ञेयाः। तत्रेति कुम्भा-द्यभावे। प्रागभावइति यथा मृत्पिण्डो घटस्य प्रागभावः। घटे समुत्पन्ने सति घटस्य प्रागभावलक्षणो मृत्पिण्डो निवर्त्तते। एवं आलोके उत्पन्ने सति प्रागभावलक्षणं तमो निवर्त्तते। निवर्त्यमानत्वादिति आलोकस्य प्रध्वंसाभावस्तमो न भवति निवर्त्यमानत्वात् प्राग-भाववत्। यथाप्रागभावो निवर्त्यमानत्वात् प्रध्वंसाभावो न भवति। निवर्त्यमानः पटादिर्वा तस्येति आलोकस्य।

मनःपर्यायं प्ररूपयन्ति ।

**मू०-संयमविशुद्धिनिबन्धनाद्विशिष्टावरणविच्छेदाज्जातं मनोद्रव्यपर्यायालम्बनं मनःपर्यायज्ञानमिति ।**

(रत्ना०)—विशिष्टचारित्रवशेन यो ऽसौ मनःपर्यायज्ञानावरणक्षयोपशमस्तस्मादुद्भूतं मानुषक्षेत्रवर्त्तिसंज्ञिजीवगृहीतमनोद्रव्यपर्यायसाक्षात्कारि यत् ज्ञानं तन्मनःपर्यायज्ञानमित्यर्थः ।

सकलप्रत्यक्षं लक्षयन्ति ।

**मू०-सकलन्तु सामग्रीविशेषतः समुद्भूतसमस्तावरणक्षयापेक्षं निखिलद्रव्यपर्यायसाक्षात्कारि स्वरूपं केवलज्ञानमिति ।**

(रत्ना०)—सामग्री सम्यग्दर्शनादिलक्षणान्तरङ्गा बहिरङ्गा तु जिनकालिकमनुष्यभवादिलक्षणा । ततः सामग्रीविशेषात् प्रकर्षप्राप्तसामग्रीतः समुद्भूतो यः समस्तावरणक्षयः सकलघातिसंघातविघातस्तदपेक्षं सकलवस्तुप्रकाशस्वभावं केवलज्ञानं ज्ञातव्यम् ।

यस्तु नैतदमंस्त मीमांसको मीमांसनीया तन्मनीषा । तथाहि । बाधकभावात् साधकाभावाद् वा सकलप्रत्यक्षप्रतिक्षेपः ख्याप्येत । आद्यपक्षे प्रत्यक्षमप्रत्यक्षं वा बाधकमभिदध्याः प्रत्यक्षं चेत् पारमार्थिकसांव्यवहारिकं वा पारमार्थिकमपि विकलं सकलं वा विकलमप्यवधिलक्षणं मनःपर्यायरूपं वा नैतत्पक्षद्वयमपि क्षेमाय द्वयस्यास्य क्रमेण रूपिद्रव्यमनोवर्गणागोचरत्वेन तद्बाधनविधावधीरत्वात् । सकलं चेदहो शुचि-

विचारचातुरी यत्केवलमेव केवलप्रत्यक्षस्याभावं विभावयतीति वक्षि ॥ वन्ध्यापि प्रसूयतामिदानीं स्तनन्धयान् । वान्ध्येयोऽपि च विधत्तामुत्तं· सान् । सांव्यवहारिकमप्यनिन्द्रियोद्भवमिन्द्रियोद्भवं वा न तावत् प्रथम· मस्य प्रातिभातिरिक्तस्य स्वात्माविष्वग्भूतसुखादिमात्रगोचरत्वात्। प्राति· भन्तु तद्बाधकं नानुभूयतएव ऐन्द्रियन्तु स्वकीयं परकीयं वा स्वकीयम· पीदानीमत्र तद्भावे बाधेत सर्वत्र सर्वदा वा । प्राचिपक्षे पिष्टं पिनष्टि भवांस्तथा तदभावस्यास्माभिरप्यभीष्टेः द्वितीयेतु सर्वदेशकालानाक· लय्येदं तदभावमुद्भावयेदितिरथा वा । आकलय्य चेदाकालं नन्दताद्भ· वान् भवत्येव सकलकालकलाकलापाशेषदेशविशेषवेदिनि वेदनस्य ता- दृशः प्रसिद्धेः अनाकलय्यचेत् कथं सकलदेशकालानाकलने सर्वत्र सर्वदा वेदनं तादृग्नास्तीति प्रतीतिरुल्लसेत् । परकीयमपीदानीमत्र तद्भावं बाधेत सर्वत्र सर्वदा वेत्यादि विकल्पजालजर्ज्जरीभूतं न तद्बाधनधुरां धार· यितुं धीरतां दधाति । कथं वा परगृहरहस्याभिज्ञो भवानेवमभूत् । तादृक्षप्रत्यक्षप्रतिक्षेपदक्षं प्रत्यक्षं प्रावर्त्तिष्ट ममेति तेन कथनाच्चेत् यदि कथिते प्रत्ययस्तर्हि तादृक्षाध्यक्षप्रतिक्षेपिप्रत्यक्षं नास्त्येवेत्युत्तंभितहस्ता वयं व्याकुर्म्महइति किन्न तथानुमन्यसे ।

अथ न यौष्माकीणः प्रमाणप्रवीणः समुल्लापः परकीयः कथमिति वाच्यम् । नखल्वयं स्वप्रत्यक्षं त्वत्प्रत्यक्षं कर्तुं शक्नोति । वचसातु यथाऽसौ कथयति तथा वयमपि ।

(टि०)-नैतत्पक्षद्वमित्यादि रूपिद्रव्येति अवधिः मनोवर्गणेति मनः· पर्यायः तत्बाधने इति सकलप्रत्यक्षबाधने नतावत् प्रथमस्येति अनिन्द्रियो- द्भवस्य प्रातिभंत्विति केवल नास्तीति अद्य मे महाप्रसादोभवितेत्यादि एतत् प्रातिभमदढं मानसप्रत्यक्षं दृढतरं अत्रतदिति प्रत्यक्षं कर्म तदभा- वस्येति तस्य सकलप्रत्यक्षस्याभाव इदानीमत्र इदमिति स्वकीयं ज्ञानम् तदभावमिति केवलाभावं भवतीति त्वयि तादृक्षेत्यादि तेनेति जैमि निना परकीय इति जैमिनिसम्बन्धी

(पं०)--सर्वत्रेति सर्वस्मिन् क्षेत्रे । सर्वदेति सर्वस्मिन् काले । इदमिति स्वकीयं प्रत्यक्षम् । भवत्येवेति त्वय्येव । तादृश इति तादृशस्य । कथं वापरगृहेत्यादि गद्ये कथमेतत्त्वया ज्ञातं यदुतैतत्प्रत्यक्षं सर्वत्र सर्वदा तद्भावं बाधेत । परचेतोवृत्तीनां भवादृशां दुर्लक्ष्यत्वादेतन्न घटते इत्यघटते इत्यर्थः ॥ तेनेति परेण । नखल्वयमिति अयं परकीयः समुल्लापः ।

(रत्ना०)--अथ तदुपदर्शितेऽर्थे संवादात् तद्वचः प्रमाणं नन्वेवं प्रत्यक्षमप्रत्यक्षं वा संवादकं स्यादित्यादि पूर्वोक्तावर्त्तनेनाननवस्थावल्लिरुल्लसन्ती कथं कर्त्तनीया । किं च ॥ संविदामिन्द्रियागोचरत्वादैन्द्रियमध्यक्षं सकलप्रत्यक्षस्य विधौ प्रतिषेधे वा मूकमेव वराकम् । न च त्वन्मते नाभावः प्रत्यक्षेण प्रेक्ष्यते तथात्वे हि किमिदानीमपहृतसर्वस्वेन तपस्विनाभावप्रमाणेन कर्त्तव्यम् । तन्न प्रत्यक्षं तद्बाधविधानसंविधानोद्धुरम् । अप्रत्यक्षमपि प्रत्यक्षाभावमात्रमपरप्रमाणरूपं वा प्रणिगद्यते आद्यं चेत् तर्हि निद्राणदशायामम्भस्तम्भकुम्भाम्भोरुहाम्भोधरादिगोचरप्रत्यक्षाभावात् तेषाममभावो भवेत् । द्वितीयं चेद्भावस्वभावमभावस्वभावं वा भावस्वभावमप्यनुमानं शाब्दमर्थापत्तिरुपमानं वा अनुमानं चेत्कस्तत्र धर्मी सकलप्रत्यक्षं पुरुषो वा कश्चित् सकलप्रत्यक्षं चेत् तत्रोपादीयमानः समस्तो हेतुराश्रयासिद्धतामाश्रयेद्भवतस्तस्याप्रसिद्धेः । पुरुषोऽपि सर्वज्ञस्तदन्यो वा धर्म्मी वर्ण्येत । सर्वज्ञश्चेत् किं सर्वज्ञत्वेन निर्णीतः पराभ्युपगतो वा निर्णीतश्चेत्कथं तत्र तादृक्षप्रत्यक्षप्रतिक्षेपः प्रेक्षाकारिणः कर्त्तुमुचितस्तन्निर्णायकप्रमाणेनैव तद्बाधनात् ।

(टि०)-अथतदुपदर्शिते इति तेन जैमिनिनोपदर्शिते तद्वचइति तस्य जैमिनिमुनेर्वाक्यं तथात्वेइति अभावस्य प्रत्यक्षप्रेक्षत्वे परचेतोवृत्तीनां भवादृशां दुर्लक्ष्यत्वात् इत्यर्थः तेषामिति स्तम्भकुम्भाम्भोरुहादीनाम् अनुमानंचेदित्यादि तत्रेति अनुमाने तत्रेति सकलप्रत्यक्षे तस्येति सकलप्रत्यक्षस्य तदन्यइति तस्मात्सर्वज्ञादन्यो व्यतिरिक्तो मूर्खः कश्चित् तत्रेति सर्वज्ञे तादृक्षेति सकलप्रत्यक्षनिरासः तन्निर्णायकेति सर्वज्ञनिश्चायकेन तद्बाधनादिति तादृक्षप्रत्यक्षप्रतिक्षेपबाधनात् ।

(पं०)—नन्वेवं प्रत्यक्षमप्रत्यक्षं वा संवादकं स्यादिति तद्वचनः प्रत्यक्षं संवादकमप्रत्यक्षं वेति योगः। प्रत्यक्षाभावमात्रमिति सदपि इदानीं न दृश्यते एतावत्तैव नास्तीति गर्भः। तस्येति सकलप्रत्यक्षस्य। तद्बाधनादिति तादृक्षप्रतिक्षेपबाधनात्।

(रत्ना०)-अथ सर्वज्ञत्वेन परैरभ्युपगतः पुमान् वर्द्धमानादिधर्म्मी तर्हि किं तत्र साध्यं नास्तित्वमसर्ववित्त्वं वा न तावन्नास्तित्वं तथाविधपुरुषमात्रसत्तायामुभयोरविवादात् तथा व्यवहारपारमार्थिकापारमार्थिकत्व एव विप्रतिपत्तेः। असर्ववित्त्वं चेत् कस्तत्रहेतुरुपलब्धिरनुपलब्धिर्वा। उपलब्धिश्चेदविरुद्धोपलब्धिर्विरुद्धोपलब्धिर्वा। अविरुद्धोपलब्धिस्तावद्व्यभिचारिणी नित्यत्वनिषेधाभिधीयमानप्रमेयत्ववत्। विरुद्धोपलब्धिस्तु किं साक्षाद्विरुद्धोपलब्धिर्विरुद्धव्याप्तोपलब्धिर्विरुद्धकार्योपलब्धिर्विरुद्धकारणोपलब्धिर्विरुद्धसहचराद्युपलब्धिर्वा स्यात्। नाद्या सर्वज्ञत्वेन साक्षाद्विरुद्धस्य किंचिज्ज्ञत्वस्य तत्र प्रसाधकप्रमाणाभावात्। नाग्रेतनविकल्पचतुष्टयमपि घटामटाट्यते। प्रतिषेध्यस्य हि सर्ववित्त्वस्य विरुद्धं किंचिज्ज्ञत्वं तस्य च व्याप्यं कतिपयार्थसाक्षात्कारित्वं २ कार्यं कतिपयार्थप्रज्ञापकत्वं ३ कारणमावरणक्षयोपशमः। ४ सहचरादि रागद्वेषादिकं ५ न च विवादापेदाने पुंसि तेषामन्यतमस्यापि प्रसाधकं किंचित्प्रमाणं तवाऽस्ति। यतस्तदुपलब्धीनां सिद्धिः स्यात् वक्तृत्वरूपाविरुद्धकार्योलब्धिरस्त्येव तन्निषेधे साधनं साधिष्ठमिति चेत् ननु कीदृग्वक्तृत्वमत्र विवक्षांचक्रे। यत्सर्ववित्त्वविरुद्धस्य कार्यं स्यात् प्रमाणविरुद्धार्थवक्तृत्वं १ तदविरुद्धार्थवक्तृत्वं २ वक्तृत्वमात्रं वा ३ आद्यभिदायामसिद्धं साधनं वर्द्धमानादौ भगवति तथाभूतार्थवक्तृत्वाभावात्। द्वितीयाभिदि तु नेयं विरुद्धकार्योपलब्धिः किं तु कार्योपलब्धिरेव तद्विधिसाधनी धूमध्वजसिद्धिनिबन्धनोपन्यस्तधूमोपलब्धिवत् तथा च विरुद्धो हेतुः। तृतीयभेदेत्वनेकान्तो वक्तृत्वमात्रे सर्ववित्त्वकार्यत्वस्याविरोधात्। अनुपलब्धिरपि विरुद्धानुपलब्धिः अविरुद्धानुपलब्धिर्वा विरुद्धानुपलब्धिस्ताव-

द्विधिसिद्धावेव साधीयस्तां दधात्यनेकान्तात्मकं वस्त्वेकान्तस्वरूपानुपलब्धेरित्यादिवत् । अविरुद्धानुपलब्धिरपि स्वभावानुपलब्धि१र्व्यापकानुपलब्धिः २ । कार्यानुपलब्धिः कारणानुपलब्धिः ३ सहचराद्यनुपलब्धिर्वाभिधीयते स्वभावानुपलब्धिरपि सामान्येनोपलब्धिलक्षणप्राप्तत्वविशेषणा वा व्याक्रियेत पौरस्त्या तावन्निशाचारादिना व्यभिचारिणी द्वितीया पुनरसिद्धा सर्वविित्त्वस्य स्वभावविप्रकृष्टत्वात् । व्यापकानुपलब्धिप्रभृतयोऽपि विकल्पा अल्पीयांसः । यतः सर्वविित्त्वस्य व्यापकं सकलार्थसाक्षात्कारित्वं कार्यमतीन्द्रियवस्तूपदेशः कारणमखिलावरणविलयः सहचरादिक्षायिकचारित्रादिकं नच तत्र तदनुपलब्धीनां सिद्धौ साधनं किंचित्तेऽस्तीत्यसिद्धा एवामूः अथ सर्वज्ञादन्यः कश्चिद्धर्मी तर्हि तस्यासर्वविित्त्वे साध्ये सिद्धसाध्यता। तन्नानुमानं तद्बाधकम्। नापि शाब्दम्। यतस्तदपौरुषेयं पौरुषेयं वा स्यात् नतावदपौरुषेयमपौरुषेयत्वस्य वचस्सु सम्भवाभावात् । पौरुषेयमपि केवलालोकाकलितपुरुषप्रणीतं तदितरपुरुषप्रणीतं वा आद्यं कथं बाधकं विरोधात्। द्वितीयेत्वसौ पुरुषः केवलालोकविकलः सकलाः पुरुषपर्षदः प्रेक्षते नवा । प्राच्यपक्षे कथं तत्प्रतिषेधस्तस्यैव तदाकलितत्वात द्वितीयेऽपि कथन्तरां तत्प्रणीतशब्दस्य पांशुलपादकोपदिष्टशब्दस्येव प्रमाणत्वासम्भवात् नाप्यर्थापत्तिस्तद्बाधिका तदभावमन्तरेणानुपपद्यमानस्य प्रमाणषट्कनिष्टंकितस्यार्थस्य कस्यचिदसत्वात् । नाप्युपमानं तस्य सादृश्यमात्रगोचरत्वात् तन्न भावरूपं प्रमाणं तद्बाधबद्धकक्षम् । नाप्यभावरूपं तस्य सत्तापरामर्शिप्रमाणपंचकाप्रवृत्तौ सत्यां भावात् । नचासौ समस्ति विवादास्पदं कस्यचित्प्रत्यक्षं प्रमेयत्वात्पटवदिति तद्ग्राहकानुमानस्य प्रवृत्तेः तन्न बाधकभावात् सकलप्रत्यक्षाऽभावः । नापि साधकाभावादनुमानस्यैव तत्साधकस्येदानीमेव निवेदनादिति सिद्धं करतलकलितनिस्तुलस्थूलमुक्ताफलायमानाकलितसकलवस्तुविस्तारं केवलनामधेयं संवेदनमिति सिद्धमेवं केवलज्ञानम् ।

(टि०) तथाव्यवहारेति व्यवहारस्य सर्वज्ञत्वस्य पारमार्थिकेति वयं ब्रूमः परमार्थेन सर्वज्ञो ऽस्ति त्वं भणासि नास्ति सर्वज्ञ इत्यत्रैव विवादात् व्यभिचारिणीति वक्तृत्वपुरुषत्वादिभिः विरुद्धसहचरादीति आदिशब्दाद् विरुद्धपूर्वचरोपलब्धिः विरुद्धोत्तरचरोपलब्धिश्च नाद्येत्यादि तत्रेति सर्वज्ञे तस्यचेति किंचिज्ज्ञत्वस्य विवादापेदाने इति विवादपदाधिरूढे सर्वज्ञे तेषामिति कतिपयार्थसाक्षात्कारित्वादीनां रागादीनां च अन्यतमस्येति एकस्यापि यतइति साधकप्रमाणात् तदुपलब्धीनामिति तस्य विरुद्धस्य किंचिज्ज्ञत्वस्य व्याप्याद्युपलब्धीनाम् तन्निषेधइति सर्वज्ञत्वनिवारणे आद्यभिदायामित्यादि तथाभूतेति प्रमाणाविरुद्धार्थस्य वक्तृत्वाऽसम्भवात् साध्यस्य सर्वज्ञत्वस्य कार्यमिदं प्रमाणाविरुद्धवक्तृत्वं तस्योपलब्धिः इयमिति प्रमाणाविरुद्धार्थवक्तृत्वलक्षणा तद्विधीति सर्वज्ञविधिसाधनी सामान्येनेति नास्ति सर्वज्ञोऽनुपलब्धेः यतः सर्वविस्त्वस्येत्यादि तत्रेति सर्वज्ञे सर्वज्ञत्वेन सह यदविरुद्धं तस्योपलब्धिः सा व्यभिचारिणी कार्यप्रसाधिका नस्यादित्यर्थः यतो नास्त्यत्र शीतं वन्ह्युपलम्भादिति वत् विरुद्धोपलब्धिर्निषेधं गमयति न पुनरविरुद्धोपलब्धिः तदनुपलब्धीनामिति सकलार्थसाक्षात्कारित्वाद्यनुपलब्धीनाम् अथसर्वज्ञादित्यादि तस्येति जडस्वभावस्य अस्माभिरप्यङ्गीक्रियतएवैतत् तद्बाधकमिति सकलप्रत्यक्षबाधनबद्धकक्षम् यतस्तदिति शाब्दम् तत्प्रतिषेधइति सकलप्रत्यक्षनिषेधः तस्यैवेति पुरुषस्यैव तदाकलितेति केवलविकलसकलपुरुषपर्षद्ज्ञानात् कथन्तरामिति तत्प्रतिषेधइति सम्बन्धः तत्प्रणीतेति तेन केवलालोकविकलसकलपुरुषपर्षदवलोककेनोपदिष्टध्वनेः पांशुलेति पथिकेन पान्थवाक्यमप्रमाणं तस्यासत्वनिश्चयाभावात् द्यूतकारादिवाक्यवत् नाप्यर्थापतिरित्यादि तदभावमिति केवलाभावं विना तस्येत्युपमानस्य तद्बाधेति सकलप्रत्यक्षबाधने प्रबुभूषति तस्येति अभावस्य प्रमाणपंचकाभावे प्रवृत्तेः प्रमाणपञ्चकं यत्र वस्तुस्वरूपेन जायते वस्तुसत्तावबोधार्थं तत्राभावप्रमाणतेति वचनात् नचासाविति प्रमाणपञ्चकाप्रवृत्तिः विवादास्पदमिति देशकालस्वभावविप्रकृष्टादिवस्तु कस्यचि-

दिति वर्द्धमानादेः तद्ग्राहकेति प्रत्यक्षग्राहकम् तत्साधकस्येति केवलज्ञानसाधकस्य ।

(पं०)—तथाव्यवहारेति गद्ये सर्वज्ञत्वस्य यत्पारमार्थिकत्वमपारमार्थिकत्वञ्च तत्रैव विप्रतिपत्तिः । अविरुद्धोपलब्धिस्तावद्व्यभिचारिणीति सर्वज्ञत्वेन सह यदविरुद्धं तस्योपलब्धिः सा व्यभिचारिणी कार्यप्रसाधिका न भवतीत्यर्थः, यतो नास्त्यत्र शीतं वह्न्युपलम्भादिति विरुद्धोपलब्धिर्निषेधं गमयति न पुनरविरुद्धोपलब्धिरिति यावत् । स्वभावविरुद्धोपलब्धिरिति अत्र प्रायः सर्वादर्शेषु साक्षाद्विरुद्धोपलब्धिरिति हेतुनामास्ति तद्व्याख्या चाग्रेतनैवेति, निषेध्येन सर्ववित्त्वेन सहस्वभावविरुद्धं किञ्चिज्ज्ञत्वं तस्योपलब्धिः । विरुद्धव्याप्तोपलब्धिरिति निषेध्येन सह विरुद्धं किञ्चिज्ज्ञत्वं तेन व्याप्तं कतिपयार्थसाक्षात्कारित्वं तस्योपलब्धिरिति । नाद्येति स्वभावविरुद्धोपलब्धिः । तत्रेति वर्द्धमानादौ । वक्तृत्वरूपेत्यादि गद्ये वक्तृत्वरूपात् विरुद्धकार्योपलब्धिस्तन्निषेधे सर्ववित्त्वनिषेधे साधिष्ठं साधनमस्त्येवेति योगः । सर्ववित्त्वविरुद्धस्येति किञ्चिज्ज्ञत्वस्य । द्वितीयभिदीति प्रमाणाविरुद्धार्थवक्तृत्वपक्षे किन्तुकार्योपलब्धिरिति विरुद्धं किञ्चिज्ज्ञत्वं तस्य प्रमाणाविरुद्धार्थवक्तृत्वं न कार्यम् यदुपलभ्येत अपितु साध्यस्य सर्वज्ञत्वस्य कार्यमिदं प्रमाणाविरुद्धार्थवक्तृत्वं तस्योपलब्धिः । विरुद्धोहेतुरिति विपरीतसाधनात् । वक्तृत्वमात्र इति वक्तृत्वमात्रं सर्ववित्त्वस्य कार्यं भवन्न विरुध्यते । विरुद्धानुपलब्धिरित्यादि अस्त्यत्र शीतं वह्न्यनुपलब्धेस्तव च निषेधोऽभीष्टः । असिद्धाएवामूरिति स्वभावानुपलब्ध्यादयः । कथन्तरामित्यत्र कथन्तरां तत्प्रतिषेधइति योगः । सादृश्यमात्रगोचरत्वादिति असता च सादृश्यं नोपपद्यते । विवादास्पदमिति सचराचरं विश्वम् । निस्तुलेति निस्तुलशब्देन वर्त्तुलस्याख्या ।

किन्तु कतरं पूरुषमेतदास्पदीकरोतीत्यत्राहुः

## मू०-तद्वान्नर्हन्निर्दोषत्वादिति ।

(रत्ना०)-तत्केवलं नित्यमस्यास्तीति नित्ययोगे मतुप् । निष्क्रान्तो दोषेभ्यो रागद्वेषाऽज्ञानलक्षणेभ्यो निर्दोषस्तद्भावस्तत्त्वं तस्मात् प्रयोगः । अर्हन् सर्वज्ञो निर्दोषत्वाद्यस्तु नैवं स नैवं यथा रथ्यापुरुषस्तथाचार्हंस्तस्मात्सर्वज्ञ इति ।

निर्दोषत्वमस्य प्रसाधयन्ति ।

**मू०-निर्दोषोऽसौ प्रमाणाऽविरोधिवाक्त्वा-दिति ।**

प्रयोगः । अर्हन्निर्दोषः प्रमाणाविरोधिवाक्त्वात् । यस्तु न निर्दोषः स न तथा यथा रथ्यापुरुषः प्रमाणाविरोधिवाक्चार्हंस्ततो निर्दोष इति ।

प्रमाणाविरोधिवाक्त्वमेवार्हतः प्रसाधयन्ति ।

**मू०-तदिष्टस्य प्रमाणेनाबाध्यमानत्वात् तद्वाचस्तेनाविरोधसिद्धिरिति ।**

तस्याऽर्हत इष्टस्य प्रतिपाद्यतया सम्मतस्यानेकान्ततत्त्वस्य तद्वाच इत्यर्हद्वाचः । अर्हन् सर्वत्र प्रमाणाविरोधिवाक् तत्र प्रमाणाबाध्यमानाभिमततत्त्वत्वाद्यस्याभिमतं तत्त्वं यत्र प्रमाणेन न बाध्यते । स तत्र प्रमाणाविरोधिवाग् यथा रोगादौ भिषग्वरो न बाध्यते च प्रमाणेनार्हतोऽभिमतमनेकान्तादितत्त्वं तस्मात्तत्राऽसौ प्रमाणाविरोधिवागिति सिद्धमर्हन्नेव सर्वज्ञ इति ।

(पं०)—अर्हन्निति गद्ये तत्रेति सर्वत्र ।

(रत्ना०)—नन्वियं त्रिभुवनभवनान्तर्वर्त्तमानाऽन्तारितानन्तारितपदार्थप्रथा त्वत्तीर्थनाथवृत्तिर्न भवति । यतो भूभूधरप्रभृतिपदार्थप्रबन्धविधानद्वारा प्रमथपतेरेवेयमुपपद्यते । यदेतदनुमानमत्र प्ररूप्यते न्यायतात्पर्यावबोधप्रधानमनोवृत्तिविद्वद्वृन्देन । विवादपदभूतं भूभूधरादिबुद्धिमद्विधेयम् यतो निमित्ताधीनात्मलाभं यन्निमित्ताधीनात्मलाभं तद्बुद्धिमद्विधेयं यथा मन्दिरं तथा पुनरेतत्तेन तथा । नतावन्निमित्ताधीनात्मलाभत्वं वादिनः प्रतिवादिनो वाऽप्रतीतं यतो भूभूधरादेरात्मीयात्मीयनिमित्तव्रातानिर्वर्त्तनीयताभुवनभाविभवभृत्प्रतीतैव नाऽपि दोलायमानवेदननिमित्तं मतिमन्निर्वर्त्तनीयेतराम्बरादिपदार्थतोऽत्यन्तव्यावृत्तत्वेन । नापि

विरुद्धतावरोधदुर्द्धरमम्बरादितोऽत्यन्तव्यावृत्तत्वेनैव नाऽपि तुरीयव्याप्या- भताप्रतिबद्धमिन्द्रियवेदनेनानुमाननाम्ना राद्धान्ताऽभिधानेन वा माने- नाऽबाधिताऽभिप्रेतधर्म्मधर्म्यनन्तरप्रतिपादितत्वेन । नाऽपि प्रत्यनुमा- नापमानतानिबन्धनमेतत्परिपन्थिधर्मोपपादनप्रत्यलानुमानाभावेन ननु भवतीदं तावदनुमानं परिपान्थिधर्मोपपादनप्रत्यलम् । यथा भूताधि- भूर्भूभूधरादिविधाता न भवति वपुर्वन्ध्यत्वेन निर्वृतात्मवत् तदनवदातम् यतोऽत्र त्रिनेत्ररूपो धर्मी धीधनेन प्रतिपन्नो ऽप्रतिपन्नो वा प्ररूपितः। न तावदप्रतिपन्नो यदेवमाधारद्वाराप्रतीतत्वोपद्रवो वपुर्वन्ध्यताव्याप्योप- निपातीभवन्न निरोद्धुं तीर्यते । यदि पुनः प्रतिपन्नोऽयं धर्मी तदा येन मानेन प्रतिपत्तिर्मन्मथप्रत्यर्थिनो ऽभिधीयते तेन तत्त्वादिविधानव्युत्पन्न- मतेरेवेयमिति तत्रोपादीयमाना वपुर्वन्ध्यता बाधितवर्त्मैवेति न नाम- प्रवर्त्तितुं पर्याप्नोति । तदेवं निमित्ताधीनात्मलाभताव्याप्यमत्यन्तपूतरूपं पर्वतादेर्धीमद्धेतुताप्रतिपादनाऽवदातमेवेति। तत्राभिधीयते। यदिदं तावन्- निमित्ताधीनात्मलाभत्वं व्याप्यमालपितं तद् द्रव्यद्वारा पर्यायद्वारा वेति भेदो- भयी । यद्याद्यः पन्थाः प्रथ्यते तदानीमप्रतीतिर्नामव्याप्योपतापः । यतो द्रव्यरूपतया पृथ्वीपर्वतादेर्नित्यत्वमेव प्रतिवादिनाऽभ्युपेयते ।

(टि०)–त्रयोदशाक्षरवादविवरणमतः प्रारभ्यते परः शैवः प्रगल्भते पण्डितपर्षदि नन्वियमित्यादि त्वत्तीर्थनाथेति तवजैनस्य संमते तीर्थकरे वर्द्धमानादौ स्थितिः प्रबन्धविधानेति सम्बन्धोत्पादनद्वारेण प्रमथपतेरिति ईश्वरस्यैव इयमिति पदार्थप्रथा यतइति निमित्ताधीनात्मलाभत्वात् कार्य- त्वादित्यर्थः अप्रतीतमिति अनिश्चितत्वादसिद्धं ततोऽपि दोलेति नानै- कान्तिकत्वं पक्षसपक्षविपक्षव्यापकत्वाद्दोलावदाचरणं तन्न मतिमान्निर्व- र्तनीयेति बुद्धिमन्निरुपायेभ्य इतरेन्ये ये ऽम्बरादय आकाशात्मप्रमुखा नित्याः पदार्थसार्थास्तेभ्यो नितरां व्यावृत्तत्वात् नापितुरीयेति व्याप्यो हेतुस्तदा- भासता कालात्ययापदिष्टत्वम् इन्द्रियेति प्रत्यक्षेण ज्ञानेन राद्धान्तेति आगमप्रमाणेन प्रतिपादीति प्रतिपादितत्वात् नापिप्रत्यनुमानेति नप्रकर-

णसमत्वदूषितम् एतत्परीति एतद्धेतुतयोपादीयमानं निमित्ताधीनात्मला भत्वं तस्य परिपन्थीशत्रुभूतो धर्मोऽकर्तृकस्तस्योत्पादनप्रवणानुमानाभा- वात् ननुभवतीत्यादि इदमिति वक्ष्यमाणलक्षणम् परिपन्थीति शत्रुभूतस्य धर्म्मस्य अकर्तृकत्वस्य जननसमर्थम् भूताधिभूरिति भूतपतिरीश्वरः भूभू- धरेति पृथ्वी २ धरादिस्रष्टा न वपुरिति देहशून्यत्वात् निर्वृत्तिपरमात्मवत् यतोऽत्रेति अनुमाने त्रिनेत्रेति ईश्वररूपोधर्म्मी धीधनेनेति बुद्धिमता भव- ता प्रतिपन्नइति ज्ञातः आधारेति आश्रयद्वारेणानिश्चितत्वव्याघातः वपुर्वन्ध्यतेति हेतुसमीपवर्त्तीभवन् तीर्यतइति शक्यते यदिपुनरित्या- दि अयमिति त्रिनेत्ररूपः येनेति प्रत्यक्षादिप्रमाणेन मन्मथेति कामवै रिणोनीलकंठस्य तेनैवेति प्रमाणेन तत्वादीति शरीरजननकुशलबुद्धेरेव इयमिति वपुर्वन्ध्यता तत्रेति मृत्युञ्जये तत्राभिधीयते जैनैः निमित्तेति कार्यत्वं व्याप्यमिति हेतुः। आलपितमिति अभिहितम् तद्द्रव्येति तत्का- र्यत्वं द्रव्यद्वारेण पर्यायद्वारेण।

(पं०)—अन्तरिताइति मेर्वादयः। अनन्तरिता इति घटपटादयः पदार्थाः। त्वत्तीर्थनाथवृत्तिरिति त्वत्तीर्थनाथे वृत्तिर्वर्त्तनं यस्येति विग्रहः। भुवनभावि- भवभृत् प्रतीतेति एतावता ते पदार्थाः कार्या यश्च कर्त्ता स ईश्वरः। नापि दोला- यमानवेदननिमित्तमिति अनैकान्तिकलक्षणदोषाकलुषितम् नापि तुरीयव्याप्या- भताप्रतिबद्धमिति कालात्ययापदिष्टहेत्वाभासत्वविवर्जितम्। इन्द्रियवेदनेनेति प्रत्यक्षेण। अनुष्णस्तेजोऽवयवीकृतकत्वादिति वत्। अनुमानेनेति शुचितरशिरः कपालं प्राण्यङ्गत्वाच्छंखशुक्तिवदिति वत्। राद्धान्ताभिधानेनेति आगमाख्येन ब्राह्मणेन सुरा पेया द्रवत्वात् क्षीरवदिति वत्। अबाधिताभिप्रेतधर्मधर्म्यनन्तरप्रतिपादितत्वे- नेति अबाधिताभिप्रेतधर्मश्चासौ धर्मी च। अबाधितः सन् अभिप्रेतो धर्मो यस्यासावबा- धिताभिप्रेत इत्येवं समासः। नापि प्रत्यनुमानोपमानतानिबन्धनमिति नित्यः शब्दोऽनित्यधर्मानुपलब्धेः एष प्रकरणसमः॥ एतद्विपरीतप्रत्यनुमानसम्भवाद्वेवं प्रकारप्रकरण- समदोषाः स्पष्टम्। परिपन्थिधर्मोपपादनप्रत्यलमिति अविधेयत्वधर्मोपपादनक्षमम्। आधारद्वारेति आश्रयद्वारेण। अप्रतीतत्वोपद्रवइति असिद्धतोपप्लवः। तेनेति

मानेन। तत्त्वादीति स्वकीयतत्त्वादीति ज्ञेयम्। धीमद्धेतुतेति बुद्धिमद्विधेयत्वम्। प्रतिवादिनेति जैनेन।

(रत्ना०)-ननु भूभूधराद्यमुत्पादवदवयवित्वेन यदेवं तदेवं यथेन्दीवरमवयविरूपं पुनरिदं तद्वदुत्पादवदेवेत्यनुमानेन तन्नित्यता निर्मूलोन्मूलितैवेति नैतद्धीमद्वृत्तिविधानप्रधानम्। यतो भूभूधरादेरवयवित्वमवयवारभ्यत्वेन यद्वाऽवयवव्रातवर्त्तमानतया मन्यते। न प्रथमविधा विबुधाऽवधानधाम यतो न नामैतत्पृथ्वीपृथ्वीधरप्रभृतिद्रव्यमभूतपूर्वमवयववृन्देन निर्वर्त्तितमिति प्रतिवादिनः प्रतीतिर्विद्यते। यदि पुनरवयववृत्तिभेदोऽभिधीयते तदानीमवयवत्वेन दोलायमानताऽत्र। यतोऽवयवोऽयमवयवोऽयमितीत्थं बुद्धिवेद्यमवयवत्वमवयववितानवृत्ति भवति। न पुनरुत्पादपराधीनं नित्यत्वेन। ननु नार्थोऽनेन दुर्भेदप्रबन्धप्रतिपादनेन। प्रतीतोऽयमवयवी तावद्घादिविततेरविवादेन पद्मपत्रपात्रदात्रादिरिति न नाम न प्रतीतोऽपि त्वात्माऽपि तथा नियमेन प्रतीतो वर्त्तते। न पुनरुत्पादवानित्यनुमेयतत्तुल्यताद्विरुद्धवृत्तित्तोपद्रवः। यदि तु पर्यायद्वारा निमित्ताधीनात्मलाभत्वं भूभूधरादेरभिधीयते। तदा नरामरादिपर्यायद्वारोत्पद्यमानात्मनोऽपि बुद्धिमदुत्पाद्यत्वमापद्यते। ननु नरामराद्युत्पादनप्रत्यलधर्म्माधर्म्मोत्पाद्यानुभवायतनभूता तथाविधा तनुरेवोत्पद्यते। न पुनरात्मा लवमात्रतोप्यनादिनिधनत्वेन यदि पुनरात्माप्युत्पत्तिविपत्तिधर्म्मा भवति। तदानीं भूतमात्रतत्त्ववादिमतापत्तिरात्मनः पूर्वोत्तरभवानुयायिनोऽभेदिनोऽनभ्युपेतत्वेनेति। तन्न बन्धुरं यतो यद्यात्मनोऽभिन्नरूपतैवाऽऽवेद्यते तदाऽन्यतरनरामरादिभववर्त्त्येवायमपरिमेयात्मीयानुभवनीयतत्तद्भवपर्यायप्रबन्धानुभवनेन द्वितीयादिभवानुभववान्न भवितुमुपपद्यते। वेद्यते त्वनेनेयं भवपर्यायपरंपरेति तद्रूपतयाऽयमुत्पत्तिमानिति नियम्यते। नाप्येवं भूतमात्रतत्त्ववादितापत्तिरात्मनोद्रव्यरूपतया नित्यताभ्युपायेन पूर्वोत्तरभवप्रतीतितः। तन्मतेन तु न नाम द्रव्यतया नित्यं वेदनं वर्त्तते यतो भूतधर्मतयाऽनेन प्रतिपादितमेतत्। तथैतदनुमानधर्म्मीन्द्रियोद्भूतबोधेनार्द्धतो बाध्यते। रूपं ध्वनिरपि

नयनोत्थप्रथाप्रत्येयमित्यादिवत्। यतोऽत्र दोलायमानविधानतत्परनरव्या-
पारः। पृथ्वीपृथ्वीधराभ्रतरुपुरन्दरधनुरादिर्भावव्रातो धर्म्मी प्ररूपितः।
तत्रत्वभ्रतरुविद्युदादेरिदानीमप्युत्पद्यमानतया वेद्यमानतनोर्विधाता नोप-
लभ्यते। ननु भवत्येव बाधेयं यद्येतद्विधानावधानप्रधानः पुमानिन्द्रिय-
प्रभवप्रभालम्बनीभूतो ऽभ्युपेतो भवतियावतातीन्द्रियोयमिति नायमुपद्रवः
प्रभवति तदनभिधानीयम्। यतो व्याप्तिप्रतिपादनप्रत्यलं मानमत्रेन्द्रिय-
द्वारोद्भूतं वेदनं तवाभिमतम्। धूमानुमानवत् धूमानुमानेऽपि न पारावारो-
द्भवौदर्यतनूनपात्तदितरतनूनपात्तुल्यत्वेन व्याप्तिः प्रतीतेतीन्द्रियो-
द्भववेदनवेद्यभावालंबनेनैवाऽनेनाऽनुमानेन भवितव्यमन्यथातु तेन व्या-
प्तिप्रतीतिर्दुरुपपादैव। ततोऽपि तत्र व्याप्त्यनालम्बनीभूतेन तेन
बुद्धिमन्निमित्तेनानुमेयताऽपि नाद्रियते। तथात्वेन प्रतिपादितं त्वेतद्-
ऽत्रेन्द्रियबोधावबोध्यतया नियमेनाभ्युपेतव्यम् यदितु तथाभ्युपेयते
तदा नैतन्निमित्तं तरुविद्युदादेरुपलभ्यते। ततोऽनेन वेदनेनाऽत्र बाधो
भवत्येव। ननु धूमानुमानप्रत्याय्यतनूनपातोऽप्येवमनेन वेदनेन
बाधो भवति। यतो न तत्राऽपि विधीयमानानुमानेन प्रमात्रा तनून-
पादिन्द्रियवेदनेन वेद्यते। तदमनोरमं यतोऽत्रानुमातुर्व्यवधिर्विद्यते-
व्यवधिमान्पुनः पदार्थो नेन्द्रियालम्बनीभवतीति तदनालम्बनीभूतः पर्व-
ततनूनपान्न तेन बाधितुं पार्यते। यदा पुनः प्रमाता तत्र प्रवृत्तो
भवति तदानीमव्यवधानायं तनूनपात्तेनोपलभ्यते। तरुविद्युल्लताभ्रादि-
बुद्धिमन्निमित्तं तु तत्र प्रवर्त्तमानेनापि नितरामवधानवतापि नोप-
लभ्यते। ततो भवति तत्रेन्द्रियोद्भवबोधबाधेति। ततोऽपि तथाविधधर्म्म्य-
ऽनन्तरनिमित्ताधीनात्मलाभत्वरूपव्याप्यप्रतिपादनेन त्वन्मतेन तुरीय-
व्याप्यामत्वोपानिपातः। मन्मतेन त्वन्तर्व्याप्तेरभावेनानियतप्रतिपत्ति-
निमित्तताऽत्र व्याप्यपराभूतिः। तथेदं निमित्ताधीनात्मलाभत्वं यदि
तन्मात्रमेव व्याप्यत्वेन प्रतिपाद्यते। तदा नाभिप्रेतपदार्थप्रतीतिनिर्वर्त्त-
नपर्याप्तमनुपलब्धपूर्वोत्पत्तिव्यापारेन्द्रमूर्द्धमर्त्त्यपूर्वत्वप्रतीत्यर्थोपात्तमृन्म-

यत्ववत्। न नाम निपेन्द्रमूर्द्धोर्मृन्मयत्वमपि भिद्यते। ननु यद्यपि मृन्मयत्वं तुल्यमत्रोभयत्राऽपि तथापि नेन्द्रमूर्द्धोऽन्यो मानवपूर्वत्वेन प्रतीतो विद्यते। ततो विवादपदापन्नोऽप्ययं तत्तुल्यत्वेन न मर्त्यनिर्वर्त्यो भवति तन्नावदातम् यतोऽत्रापि न भूभूधरभुवनादिप्रायः पदार्थोऽन्योबुद्धिमन्निमित्तोपेतः परिभावितो वर्त्तते। ततो विवादपद्धतिप्रतिबद्धोऽप्ययं न तथा भवितुं लभते। ननु निपादिर्विद्यते बुद्धिमन्निमित्तोपेतः परिभावितो ऽतोविवादापन्नोऽपि तथाऽनुमातुमनुरूपः। तदवद्यं यतोऽन्यत्रापि निपादिरेव मानवनिर्वर्त्यो विभावितो विद्यते। ततः पुरन्दरमूर्द्धाऽपि तन्निर्वर्त्त्येन नितरांभावितव्यम्। ननु नरनिर्मितनिपादितः पुरन्दरमूर्द्धोर्वैरूप्यमुपलभ्यते। ततो न तत्र मर्त्यनिर्वर्त्यतानुमानमुपपन्नम् यद्येवं तदानीमेतद्वैरूप्यं निपादितो भूभूधरभुवनादेरपि परिभाव्यते यतो निपादिना ऽनुपलब्धबुद्धिमद्व्यापारात्मनाप्युपलब्धेन नियमतो निर्वर्त्तितोऽयं मतिमतेति बुद्धिरुत्पाद्यते। न पुनर्भुवनादिना ततो न निमित्ताधीनात्मलाभत्वमात्रं बुद्धिमद्धेतुत्वप्रतीतिविधानबन्धुरम्। यदातु धरित्रीधरित्रीधरात्रिभुवनादिविधानं नप्रतीतम्। तदानीं त्रिनयनो भुवनभवनान्तर्भाविभावव्रातप्रद्योतनप्रबलवेदनप्रदीपवानिति निर्द्धनदानमनोरथप्रथैवेयमिति। त्यादिवचनद्वयेन स्यादिकवचनत्रयेण वर्णैस्तु। त्रिभिरधिकैर्दशभिरयं व्यधायि शिवसिद्धिविध्वंसः॥१॥ ति, ते, सि। टा। ङस्। तथदधन। पबभम। यरलव।

(टि०)–अवयावित्वेनेति अवयवित्वात् इदमिति भूभूधरादि तान्नित्यतेति पृथ्वीपर्वतादि सनातनत्वम् नैतद्वृत्तीति नैतच्चतुरचेतश्चमत्कारकारि अवयवेति अवयवैरारभ्यमाणत्वात्पर्वतादेः यथा तन्तुभिः पटः क्रियते अवयवसमूहे वर्त्तमानत्वात्तस्य यथा तन्तुषुपट इति वा यथा किलाऽभूतपूर्वं घटाद्यवयववृन्देन निर्वर्त्यते तथा पर्वतादयो नाऽनादिसिद्धत्वात् तेषां अभूतपूर्वमविद्यमानम् प्रतिवादिनो जैनस्य यदिपुनरित्यादि अवयवत्वेनेति अवयवसामान्येन वा अवयववृत्तित्वेन दोलेति पक्षसपक्षविपक्षवृत्तित्वलक्षणानैकान्तिकत्वम् अत्र हेतौ अनेनदुर्भेदेति दुष्टविकल्पोत्पादनेन

ननुनामेति अवयवीप्रसिद्धएव पुनरात्मापि तथेति अवयवित्वेन अनु-
मेयेति अनुमेयः पक्षः तत्तुल्यः सपक्षः तद्विरुद्धो विपक्षः तत्र वृत्तित्वं
पक्षसपक्षविपक्षलक्षणानैकान्तिकत्वम् अनुभवेति आत्मनो भोगायतनभूता
तथाविधेति नरामरादिरूपा भूतमात्रेति भूतचतुष्टयवादिनो नास्तिकस्य
मतप्रसङ्गः अभेदिनइति एकाकिनः अभ्युपेतेति अनङ्गीकृतत्वात् अभि-
न्नरूपतेति एकस्वभावता तदाऽन्यतरस्मिन्नेकस्मिन्नरभवेऽमरभवे वा वर्त्त-
मानः अयमिति आत्मा अपरिमेयेति अपरिमितानामपाराणां स्वकी-
यानुभवनीयानां नरामरादिभवपर्यायाणाम् अनेनेति आत्मना तद्रूप
तयेति भवपर्यायवेदनरूपतया अयमिति आत्मा नियम्यते इति
निश्चीयते भूतमात्रेति नास्तिकत्वम् तन्मतेनेति चार्वाकाभिप्रायेण अने-
नेति लोकायितेन एतदिति वेदनम् तथैतादित्यादि एतस्य नैयायिकप्र-
तिपन्नस्याऽनुमानस्य धर्म्मी भूभूधरादिकं बुद्धिमद्विधेयमित्यत्र इन्द्रियेति
प्रत्यक्षेण अर्द्धतइति अंशेनेत्यर्थः दोलायमानेति दोलायमानोविधान-
तत्परनरव्यापारो यत्र तथा सन्दिग्धकर्तृक इत्यर्थः भावव्रातइति पदार्थ
संघातः तत्रेति भावव्राते ननुभवतीत्यादि एतद्विधानेति भूभूधरादिजनक-
इन्द्रियप्रभवेति प्रत्यक्षज्ञानविलोकनीयः मानामिति प्रमाणम् इन्द्रियद्वा-
रेति प्रत्यक्षज्ञानमन्तरेण त्वन्मतेऽपि व्याप्तिः संभवति पारावारेति
वडवानलः औदर्येति जठरसंभूतवह्निस्तयोरितरः सामान्यः पर्वतावष्टब्धो
वा तेषां सामान्येन इन्द्रियोद्भवेति प्रत्यक्षज्ञानज्ञेयपदार्थाधारश्रितेन
अन्यथेति दृश्यत्वाभावे तेनेति ऐन्द्रियज्ञानेन ततोऽपीति ततश्च
तत्रेति साधने व्याप्त्यनालम्बेति अदृश्येन बुद्धिमत्कर्त्रा अनुमेयेति
व्याप्त्यनालम्बनीभूतं साध्यं न भवतीत्यर्थः तथात्वेनेति अनुमेयतया
एतादितिबुद्धिमन्निमित्तं अत्रेति अनुमाने इन्द्रियबोधेति प्रत्यक्षवेदनवेद्य
तया यदितुतथेति प्रत्यक्षज्ञेयतया एतादिति बुद्धिमत्पूर्वकम् ततोऽनेनेति
ऐन्द्रियप्रत्यक्षेण अत्रेति अनुमानधर्म्मिणि अंशेन अनेनेति ऐन्द्रिय-
प्रत्यक्षेण तत्रापीति कृशानुविषयाऽनुमानेपि विधीयमानेति विधीयमान-



मनुमानं येन स तथा तेनाऽत्र बहुव्रीहिः तदनालम्बेति इन्द्रियगोचरातीतः तेनेति ऐन्द्रियेण यदापुनरित्यादि तत्रेति वह्निमत्पर्वतादिप्रदेशे तेनेति प्रमात्रा तत्रेति तरुमूलोपविष्टेनाऽपि तत्रेति वृक्षादौ बुद्धिमन्निमित्तपूर्वके-साध्ये इन्द्रियोद्भवेति प्रत्यक्षज्ञानबाधा तथाविधेति प्रत्यक्षबाधितधर्मध-र्म्यनन्तरम् व्याप्येति हेतुप्ररूपणात् तुरीयेति त्वत्तर्काभिप्रायेण कालात्यया-पदिष्टहेत्वाभासोपद्रवः मन्मतेनेति ममतर्कपरितर्कणन्यायेन व्याप्यपरा-भूतिरिति अनैकान्तिकत्वमित्यर्थः तन्मात्रमेवेति निर्विशेषणमेव तदा-नाभिप्रेतेति अभिप्रेतस्य बुद्धिमद्विधेयतयाऽभिलषितस्य पदार्थस्य भूभू-धरादेर्निश्चयोत्पादनसमर्थम् अनुपलब्धः पूर्वमज्ञातः पूर्वं उत्पत्तिव्यापारो यस्य एवं विधस्येन्द्रमूर्द्धावल्मीकशृङ्गस्य मनुष्यानिष्पाद्यानिश्चयनिमित्तं गृहीत-मृन्मयत्ववत् यथा मूर्द्धामानवकृतः मृन्मयत्वात् कलशवत् एतदनुमानम-लीकम् निपेति घटः उभयत्राऽपि घटे इन्द्रमूर्ध्नि च अयमिति इन्द्रमूर्द्धा तत्तुल्येति मानवपूर्वत्वात्प्रतीतान्येन्द्रमूर्द्धसाम्येन यतोऽत्रापीति भवत्प्रयुक्ता-नुमाने अयमिति भूभूधरादिः पदार्थप्रसरः तथेति बुद्धिमन्निमित्ताधी-नात्मलाभरूपः निपादिरिति घटादिः परिभावितइति विचारतः विवा-देति विवादपद्धतिसमारूढो भूभूधरादिरपि तथेति बुद्धिमन्निमित्तोपेतः पुरन्दरेति इन्द्रमूर्द्धापि वल्मीकेनापि तन्निर्वर्त्येति मानवानिष्पाद्येन न तत्रेति वल्मीकशृङ्गे यद्येवमिति कुटपुरन्दरमूर्द्धाराकारवैरूप्यादेव मानव-निष्पाद्यानिष्पाद्यभेदः एतद्वैरूप्यइति वल्मीकोपदिष्टवैरूप्यः अनु-पलब्धेति पूर्वमज्ञातमतिमच्चक्रजीविकव्यवसायस्वरूपेण ज्ञातेन अय-मिति निपादिः शिवसिद्धीति त्रयोदशभिर्वर्णैर्द्वाभ्यां स्यादेस्त्रिभिर्वचनैः स्यादेर्नियमेन शैवाभिमतं विश्वस्य शिवकर्तृत्वं निरस्तं सूरिभिः।

(पं०)—नैतद्धीमद्वृत्तीत्यादि सूरिवाक्यम्। अभूतपूर्वमिति यथा किलाभूतपूर्वं-घटाद्यवयववृन्देन निर्वर्त्यते तथा न पर्वताद्यनादिसिद्धत्वात् तेषाम् प्रतिवादिन इति जैनस्य अवयवत्वेनेति अवयवत्वसामान्येन। दोलायमानतेति अनैकान्तिकता।

---

१ व्याप्ति इति वा पाठम्।

ननामेति आचार्यवाक्यम्। तथेति अवयवित्वेन अनुमेयेति भूभूधरादि। तत्तुल्येति घटादि। तद्विरुद्धेति आत्मादि। वृत्तितोपद्रवइति पक्षसपक्षविपक्षेषु त्रिष्वपि वर्त्तमानोऽनैकान्तिकोऽनैकान्तिकत्वमित्यर्थः। ननुनरामरेति गद्ये धर्माधर्मशब्देनादृष्टम् तथाविधातनुरिति नराणां तादृशी तिरश्चां तादृशी। तन्मतेति गद्ये वेदनमिति चेतना। अनुमानधर्मीति भूभूधरादिरूपो धर्मी अर्द्धतइति अर्द्धतएकदेशेऽम्रतरुप्रभृतौ प्रत्यक्षबाधः दोलायमानेति गद्ये दोलायमानो विधानतत्परनरव्यापारो यस्मिन् स तथाविधः सान्दिग्धकर्तृकइत्यर्थः वेद्यमानतनोरिति दृश्यशरीरस्य इन्द्रियप्रभवप्रभालंबनीभूतइति नाथनरदृश्याश्रयीभूतः। उपद्रवइति एकदेशे प्रत्यक्षबाधः। व्याप्तिप्रतिपादनप्रत्यलमिति अनुमानं हि गृहीतव्याप्तिकं प्रवर्त्तते। व्याप्तिश्च प्रत्यक्षेण गृह्यते भवताम्। तवेति नैयायिकस्य। इन्द्रियोद्भवेत्यादि गद्ये वेद्यशब्देन दृश्यम्। अन्यथेति अदृश्यत्वाभावे तेनेति इन्द्रियवेदनेन। ततोऽपीति ततश्च। तत्रेति अनुमाने तेनबुद्धिमन्निमित्तेनेति अदृश्येन बुद्धिमता कर्त्रा। अनुमेयतानाद्रियत इति व्याप्त्यनालम्बनीभूतं साध्यं न भवतीत्यर्थः। तथात्वेनेति व्याप्त्यालम्बनत्वेन एतदिति बुद्धिमन्निमित्तम्। इन्द्रियबोधाववोध्यतयेति प्रत्यक्षग्राह्यतया। तथेति इन्द्रियबोधाववोध्यतया। विधीयमानानुमानेनेति बहुव्रीहिः। तदनालम्बनीभूतइति इन्द्रियानाश्रयीभूतः। तेनेति इन्द्रियवेदनेन। बुद्धिमन्निमित्तमिति बुद्धिमच्च तन्निमित्तञ्च। तथाविधधर्मीत्यादिगद्ये तथाविधइति प्रत्यक्षबाधितः। व्याप्यशब्देन हेतुः। तुरीयव्याप्याभत्वोपनिपातइति कालात्ययापदिष्टोपनिपातः। अनियतप्रतिपत्तिनिमित्ततेति अनैकान्तिकत्वम्। निमित्ताधीनात्मलाभत्वमपि भविष्यति बुद्धिमद्विधेयत्वमपि न भविष्यतीति भावः। तदानाभिप्रेतेति गद्ये अभिप्रेतपदार्थो बुद्धिमत्कर्तृकत्वम् अनुपलब्धपूर्वोत्पत्तिव्यापारेन्द्रमूर्द्धइति अनुपलब्धपूर्वउत्पत्तिव्यापारो यस्येति समासः स हि पिपीलिकादिभिर्निःपाद्यमानो न दृष्टः। इन्द्रमूर्द्धा वल्मीकः। निपेन्द्रमूर्द्धइति घटवल्मीकयोः समाहारद्वन्द्वैकत्वात्। अन्यइति अनुपलब्धपूर्वोत्पत्तिर्व्यापारेन्द्रमूर्द्धनोऽन्यः कोऽर्थ उपलब्धपूर्वोत्पत्तिव्यापार इत्यर्थः। अयमिति तरुविद्युदादिः।

केवलिनः कवलाहारवत्वे सर्वविच्वं विरुध्यत इतीष्टवतो नग्नाटान् विघटयितुमाहुः ।

## मू०-न च कवलाहारवत्वेन तस्याऽसर्वज्ञत्वं कवलाहारसर्वज्ञत्वयोरविरोधादिति।

(रत्ना०)-तथाह्यनयोः साक्षात्परंपरया वा विरोधमभिदधीरन्नह्रीकाः। तत्र यदि साक्षात्पक्षोपक्षेपदीक्षादक्षा विवक्षेयुः क्षपणकास्तत्क्षूणम्। नहि सति सार्वज्ञ्ये केवली कवलान् न प्राप्नोति। प्राप्तानपि नाहर्तुं शक्नोति। शक्तोऽपि वा विमलकेवलालोकपलायनशंकया नाहरतीत्यस्ति सम्भवोऽन्तरायकेवलावरणकर्म्मणोः समूलकाषंकषणात् । अथ परंपराकल्पकल्पनास्वल्पतल्पगा जल्पेयुस्तदप्यल्पीयः। यतः किमेवं सति कवलाहारस्य व्यापकं कारणं कार्यं सहचरादि वा सार्वज्ञ्येन विरोधमधिवसेदशेषमपि चैतत्परस्परपरिहारेण सहानवस्थाऽनेन वा विरुध्येत। प्राचीनेन चेत् तदानीं तावज्ज्ञानेनाऽपि साकं कवलाहारव्यापकादेः परस्परपरिहारस्वरूपविरोधसद्भावाद्भवतोऽपि कवलाहाराभावः स्यादित्यहोपुरुषकारो यत्स्वस्यैव प्रभवितासि द्वितीयेन तु न तावद् व्यापकं व्याहन्यते। कवलाहारस्य हि व्यापकं शक्तिविशेषवशादुदरकन्दराकोणे क्षेपः। स च सति सार्वज्ञ्ये सुतरां सम्भाव्यते। वीर्यान्तरायकर्म्मनिर्मूलोन्मूलनात् तत्र तत्क्षेपहेतोः शक्तिविशेषस्य सम्भवात् । कारणमऽपि बाह्यमाभ्यन्तरं वा विरोधमधिरोहेत्। बाह्यमपि कवलनीयं वस्तु तदुपहारहेतुपात्रादिकमौदारिकशरीरं वा। न प्रथमं यतो यदि सर्ववेदिसंवेदनं कवलनीयपुद्गलैर्विरोधधुरां धारयेत तदानीमस्मदादिसंवेदनमपि तथा स्यान्नखलु तरुणतरतरणिकिरणनिकरेणान्धकारनिकुरुम्बं विरुद्धं प्रदीपालोकेनापि न तथा भवति तथा च करतलवलितहारगोचरज्ञानोत्पादे ऽस्मदादीनामपि तदभावो भवेदित्यहो किमपि नूतनतत्त्वालोककौशलं यदात्मन्यपि नाहारापेक्षा अस्मदादौ तयोर्विरोधावबोध एव हि तत्र तत्प्रतिपत्तावुपाय-

स्तस्याऽस्मदादीनामगोचरत्वाद्यथास्मदादौ ज्ञानतारतम्यावबोधस्तस्य निःशेषविषयत्वस्य प्रतिपत्ताविति । पात्रादि पक्षोऽपि नाक्षूणः। भगवतामर्हतां पाणिपात्रत्वादितरेषामपि केवलिनां स्वरूपमात्रेण तत्तद्विरोधदुर्द्धरं स्यान्ममकारकारणतया वा तत्रादिमः समनन्तरपक्षः प्रहारेणैवोपक्षीणः द्वितीयोऽपि नास्ति निर्मोहत्वेन तेषां तत्र ममकारविरहात् नच पात्रादिभावे भवितव्यमेवानेनेत्यवश्यम्भावोऽस्ति शरीरभावेऽपि तद्भावप्रसङ्गादितरजनेषूभयभावेऽपि तद्दर्शनात् । औदारिकशरीरमपि न तेन विरोधमध्यूषिवत्केवलोत्पत्तिसमनन्तरमेव तदभावापत्तेः । आभ्यन्तरमपि तत्कारणं शरीरं कर्म वा । न तावत्प्रथमं विरुध्यते । भुक्तिहेतोस्तैजसशरीरस्य सार्वज्ञ्येन सार्द्धं त्वयापि सत्त्वस्वीकारात् । कर्म्मापि घात्यघाति वा घात्यपि मोहरूपमितरद्वा । इतरदपि ज्ञानदर्शनावरणं अन्तरायो वा । नाद्यस्तयोर्ज्ञानदर्शनावरणमात्रचरितार्थत्वेन तत्कारणत्वानुपपत्तेः । नापि द्वितीयोऽन्तरायविलयस्यैव तत्कारणत्वात्तस्य च साकल्येन केवलिनस्त्वयापि स्वीकारात् । मोहोऽपि बुभुक्षालक्षणस्तत्कारणं सामान्येन वा । प्रथमप्रकारे सर्वत्रापीयं तत्कारणमस्मदादावेव वा । प्राच्यः प्रमाणमुद्रादरिद्रा ।

(टि०)-तथाहीत्यादि अनयोरिति कवलाहारसर्वज्ञत्वयोः नहीकाः क्षपणकाः निर्लज्जा नग्नत्वात् तत्रेति पक्षद्वयमध्ये प्राचीनेत्यादि परस्परेति ज्ञाने कवलाहारो नास्ति कवलाहारे च ज्ञानं नास्तीतीतरेतराभावः तवाऽपि करतलगतकवलादिज्ञानसद्भावे कवलाहारो न युक्तियुक्तः विरोधात् द्वितीयेनेति सहानवस्थाऽनेन तत्रेति सर्वज्ञे तत्क्षेपेति कवलाहारक्षेपनिमित्तस्य कवलनीयमिति अन्नाद्यं शाकपानकाद्यम् तदुपहारेति कवलनीयवस्त्वानयनकारणम् तथास्यादिति अस्मद्ज्ञानमपि कवलाहारेण विरुद्धं भवेत् नतथेति अन्धकारनिकुरुंबं प्रदीपेन समं विरुद्धं न तथाचेति केवलाहारज्ञानयोर्विरोधसद्भावे सति हस्तास्थितकवलज्ञानमप्यस्माकं न स्यात् स्वल्पमप्यस्मत्ज्ञानं तथा निर्मूलनाशमासादयेत् अस्मदादावित्यादि केवलावरणकर्म्मणोरिति अन्तरायक्षयात् प्राप्नोति आहर्तुं शक्नोति केवलं न

पलायते तयोरिति ज्ञानकवलनीयाहारपुद्गलयोः अवबोधेइति विरोधज्ञाने सति तत्रेति सर्वज्ञत्वे तत्प्रतिपत्तौ विरोधप्रतिपत्तौ तस्येति विरोधस्य तारतम्येति अधिकाधिकावबोधः तस्येति सर्वज्ञत्वस्य उपायइति सम्बन्धः इतरेषामिति सामान्यकेवलिनां अस्मदादीनां वा तदिति पात्रादि समनन्तरेति पात्रादिना सह सर्वज्ञत्वस्य विरुद्धत्वे सति अस्मदादिज्ञानमपि पात्रादिना सहविरोधमधिवसेत् निर्मोहत्वेन तेषामिति भगवतां तीर्थङ्कराणां सामान्यकेवलीनां वा तत्रेति पात्रादौ अनेनेति ममकारेण मोहेन वा तद्भावेति ममकारभावप्रसक्तेः उभयभावेऽपीति पात्रादिशरीरलक्षणद्वयसम्भवेऽपि तद्दर्शनादिति ममकारविलोकनान्मोहानिरीक्षणाद्वा औदारिकेत्यादि तेनेति सर्वज्ञत्वेन अध्यूषिवत् इति अधिपूर्वंवस्निवासे वस् अध्युवास क्वन्सुकानौ वन्स् प्रत्ययः स्वपिवचीत्यादिना सम्प्रसारणं द्विर्वचनं अर्त्तीण्घसैक० इडन्तः प्र० सि नपुंस्का० सिलोपः विरामव्यञ्जनादावुक्तमिति देशबलादिति नलोपः विरामव्यञ्जना० सस्य दत्वं वाविरामे तत्त्वम् तदभावेति औदारिकशरीराभावप्राप्तेः नाद्यस्तयोर्ज्ञानदर्शनावरणयोः तत्कारणत्वेति कवलाहारकारणत्वम् तत्कारणत्वादिति कवलाहारकारणत्वात् नह्यन्तराये सति महाकुलप्रसूतस्याऽपि सद्गुरुदीक्षितस्यापि गुरुतपश्चरणभरधरणसमर्थस्यापि कवलप्राप्तिर्भवेत् ढण्ढणकुमारवत् ॥ यदुक्तं सिरिवासुदेवतणुओ सीसोतिअलुक्कसामिनेमिस्स सव्वगुणाणनिवासो धणकणयसमिद्धनयरीए ।

भममाणोवि न पावइ भिक्खामित्तंपि ढंढणकुमारो जम्मन्तरनिव्वत्तियतिव्वमहाकम्मदोसेण ।

(पं०)–समनन्तरपक्षप्रहारेणैवेति अस्मदादिसंवेदनमपीत्यादिरूपेण। अनेनेति ममकारेण ।

(रत्ना०)–अथ या चेतनक्रिया सेच्छापूर्विकैव यथा संप्रतिपन्ना तथा च भुजिक्रियेत्यस्ति प्रमाणं। तथाहि प्रथमं प्रमाता प्रमिणोति ततइच्छत्यनन्तरं यतते ततोऽपि करोतीति । नैवं सुप्तमत्तमूर्छितादिक्रियाभिर्व्यभिचारात् । स्ववशचेतनाक्रियेति सविशेषणहेतूपादानेऽपि केवलिगतगतिस्थितिनिषद्यादिक्रियाभिर्व्यभिचारात् । द्वितीये तु सिद्धसाध्याः स्मः केवलिनि वेदनीयादिकारणिकाया भुक्तेः सिद्धत्वात । न सामान्येनाऽपि

मोहस्तत्कारणमेवं हि गतिस्थितिनिषद्यादीनामपि स एव कारणं स्यात् तथा च केवलिनि मोहाभावात् तासामप्यभावो भवेदिति कुतस्तीर्थप्रवृत्तिः स्यात् ।

अथ गत्यादिकर्म्मैव तत्कारणं न मोहस्तर्हि वेदनीयादिकर्म्मैव कवलाहारकारणं न मोह इत्यपि प्रतिपद्यताम् ।

अथाघातिकर्म्मतत्कारणं किमाहारपर्याप्तिर्नामकर्मभेदो वेदनीयं वा न द्वयमप्येतत्प्रत्येकं तथायुक्तं तथाविधाहारपर्याप्तिनामकर्म्मोदये वेदनीयोदयप्रबलप्रज्वलदौदर्यज्वलनोपतप्यमानोहि पुमानाहारमाहारयति। एवं च समुदितं पुनरेतद्भवति तत्कारणं किन्तु न सार्वज्ञ्येन विरुध्यते सर्वज्ञे त्वयाऽपि तदुपगमात् ।

अथ मोहसहकृतं तत्तत्कारणं तदसङ्गतं गत्यादिकर्म्मणामिवास्यापि मोहसाहायकरहितस्यैव तत्र तत्कारित्वाविरोधात् ।

अथाशुभप्रकृतय एवैतस्य साहायकमपेक्षन्ते नान्यागत्यादयोऽशुभप्रकृतिश्चेयमसातवेदनीयरूपेति चेत् । तत्किमियं परिभाषा । अस्मदादौ तथा दर्शनादेवं कल्प्यत इति चेत् ननु शुभप्रकृतयोऽप्यस्मदादौ मोहसहकृता एव स्वकार्यकारणकौशलमवलम्बमाना विलोकयांचक्रिरे ततस्ता अपि तथा स्युस्ततो नैतद्द्वयस्य मोहापेक्षस्य तत्कारणत्वं किन्तु स्वतन्त्रस्य तच्च केवलिन्यविकलमस्त्येव। तन्नकारणं केवलित्वेन विरुध्यते। कार्यं तु यदि विरुद्धं तदा तत्तत्र मोत्यादि। अविकलकारणस्तु तत्रोत्पद्यमानः कवलाहारोऽनिवार्य एव किंच किंनामाहारकार्यं सार्वज्ञ्येन हन्यते रसनेन्द्रियोद्भवमतिज्ञानं ध्यानविघ्नः परोपकारकरणान्तरायो विसूचिकादिव्याधिरीर्यापथः पुरीषादिजुगुप्सितं कर्म्मधातूपचयादिना रिरंसा निद्रा वा। नाद्यः पक्षस्तावन्मात्रेण रसनेन्द्रियज्ञानासम्भवादन्यथाऽमरनिकरनिरन्तरनिर्मुक्तकुसुमपरिमलादिसम्बन्धात् घ्राणेन्द्रियज्ञानमपि भवेत् । न द्वितीयः केवलिनः शैलेशीप्रारम्भात्प्राग्ध्यानानभ्युपगमात्

१ तत्कार्यमित्यपि पाठान्तरम् । २ तेनेत्यपि पाठान्तरम् ।

तत्र च कवलाहारास्वीकारात् तद्ध्यानस्य च शाश्वतत्वादन्यथा गच्छतोऽपि कथन्नैतद्विघ्नः स्यात न तृतीयस्तृतीययाममुहूर्त्तमात्र एव भगवतां भुक्तेः शेषमशेषकालमुपकारावसरान्न चतुर्थः । परिज्ञाय हितमिताहाराभ्यवहारात् । न पञ्चमो गमनादिनापीर्यापथप्रसङ्गात् । न षष्ठो यतस्तस्मिन् क्रियमाणे तस्यैव जुगुप्सा सम्पद्येताऽन्येषां वा । न तावत्तस्यैव भगवतो निर्म्मोहत्वेन जुगुप्साया असम्भवात् । अथाऽन्येषां तत्किमनुजदनुजामरेन्द्रतद्रमणीसहस्रसङ्कुलायां सभायामनंशुके भगवत्यासीने सा तेषां न सञ्जायते । अथ भगवतः सातिशयत्वान्नतन्नाग्न्यं तेषां तद्धेतुस्तर्हि तत एव तन्नीहारस्य मांसचक्षुषामदृश्यत्वान्न दोषः सामान्यकेवलिभिस्तु विविक्तदेशे तत्करणाद्दोषाभावः । नाऽपि सप्तमाष्टमौ रिरंसानिद्रयोर्मोहनीयकार्यत्वाद्भगवति तु तदभावात् । तन्न कार्यमपि तस्य तेन विरुध्यते । नाऽपि सहचरादि यतस्तत्सहचरं छद्मस्थत्वमन्यद्वा निगद्येत । न तावदाद्यमुभयवाद्यविवादास्पदत्वेनासिद्धेः अस्मदादौ तथा दर्शनात् तत्साहचर्यनियमोपगमे गमनादेरपि तत्सहचरं स्यात् । अन्यत्तु करचङ्क्रचालनादि भवति तत्सहचरं न तु केवलित्वेन विरुद्धं । एवमुत्तरचरादिकमपि न केवलित्वेन विरुध्यत इति स्थितं कवलाहारसर्वज्ञत्वयोरविरोधादिति हेतुसिद्धिवधूसम्बन्धबन्धुर इति ।

इति प्रमाणनयतत्त्वालोकालंकारे श्रीरत्नप्रभाचार्यविरचितायां रत्नाकरावतारिकाख्यलघुटीकायां प्रत्यक्षस्वरूपनिर्णयो नाम द्वितीयः परिच्छेदः ॥२॥

(टि०)-तस्येति अन्तरायाविलयस्य साकल्येनेति सकलतया सर्वथान्तरायस्य नाशे केवलोत्पत्तिरिति भावः तत्कारणमिति कवलाहारकारणम् सर्वत्रापीति अस्मदादौ सर्वज्ञत्वे च इयमिति भोजनेच्छा द्वितीयेत्विति अस्मदादावेवेति पक्षे अस्मदादौ भोजनेच्छा वर्त्तते नचसर्वज्ञेइति नः पक्षकक्षाप्रविष्टो भवान् सएवेति मोहएव तथाचेति मोहस्य गत्यादिकारणत्वे सति तेषामपीति गतिस्थितिनिषद्यादीनाम् अत्रगत्यादीत्यादि तत्कारणमिति गतिस्थितिनिषद्यादिकारणम् तथायुक्तमिति कवलाहारकारणमुचितम् समुदितमिति मिलितम् एतदिति आहारपर्याप्ति-

वेदनीयकर्म्मद्वयम् तत्कारणमिति कवलाहारकारणम् तदुपगमादिति आहारपर्याप्तिवेदनीयकर्म्मद्वयस्याङ्गीकारात् अस्याऽपीति आहारपर्याप्तिवेदनीयद्वयस्य तत्रेति सर्वज्ञे तत्कारित्वेति कवलाहारकारित्वाविरोधात् एतस्येति मोहस्य इयमिति आहाररूपा परिभाषेति सिद्धान्तभणितम् तथादर्शनादिति आहारस्यासातारूपस्यावलोकनात् ततस्ताइति शुभप्रकृतयः तथेति मोहसहकृता एव भवेयुः तच्चेति स्वतन्त्रं द्वयं तदातदित्यादि तदिति कार्यम् तत्रेति सर्वज्ञे तत्कार्यमिति आहारकार्यम् तेनेति सर्वज्ञेन तावन्मात्रेणेति कवलाहारसम्बन्धमात्रेणैव किन्तु क्षयोपशमेनैव सर्वज्ञस्य त्विन्द्रियज्ञानकर्म सर्वथा क्षीणम् अन्यथेति इन्द्रियज्ञानकर्मणि अक्षीणे सति तद्ध्यानस्येति केवलिध्यानस्य केवलिनः शैलेशीप्रारम्भात् ध्यानानभ्युपगमात् तत्र च कवलाहारास्वीकारात् अन्यथेति आशाश्वतत्वे एतद्विघ्नइति ध्यानान्तरायः अथान्येषामित्यादि सेति जुगुप्सा तेषामिति अन्येषां मानवादीनाम् तन्नाऽन्यमिति भगवन्निरावरणता तेषामिति अमरेन्द्रादीनाम् तद्धेतुरिति जुगुप्साकारणम् ततएवेति सातिशयत्वादेव तन्नीहारस्येति सर्वज्ञनीहारस्य तत्करणादिति नीहारकरणात् तदभवादिति रिरंसानिद्राभावात् तन्नेत्यादि तस्येति कलवाहारस्य तेनेति सर्वज्ञत्वेन अस्मदादावित्यादि तथेति आहारच्छद्मस्थत्वयोः साहचर्यावलोकनात् तत्साहचर्येति सर्वज्ञेऽपि च्छद्मस्थत्वसाहचर्यनिश्चये सति तदिति च्छद्मस्थत्वम्।

इति श्रीसाधुपूर्णिमागच्छीयश्रीमदाचार्यगुणचन्द्रसूरिशिष्य पं० ज्ञानचन्द्रविरचिते रत्नाकरावतारिकाटिप्पणके द्वितीयः परिच्छेदः समाप्तः॥

(पं०)—अथमोहसहकृतमिति गद्ये अस्येति आहारपर्याप्तिवेदनीयस्य। तत्रेति सार्वज्ञ्ये। तत्कारित्वाविरोधादिति कवलाहारकारित्वाविरोधात्। अस्वीकारादिति अस्माभिः श्वेताम्बरैरपि।

द्वितीयपरिच्छेदस्थलसंख्या।

उपमानस्यार्थापत्तेरभावस्य संभवस्य ऐतिह्यस्य प्रातिभस्य च पृथक्प्रामाण्यनिराकरणानि १॥ चक्षुषः प्राप्यकारित्वनिरासः २॥ श्रोत्रस्य प्राप्यकारितानिरासः ३॥ तमश्छाययोर्द्रव्यत्वस्थापनम् ४॥ मीमांसकाभिप्रायेण सर्वज्ञनिषेधोयस्तस्य निराकरणम् ५॥ ईश्वरसृष्टिनिराकरणम् ६॥ केवलिनः कवलाहारो नास्तीति वादिदिगम्बरानिराकरणम्॥ ७॥ एवं सप्त॥

इति द्वितीयपरिच्छेदः समाप्तः।